# प्रस्तावना.

श्रीमद्भगवन्नेमिचन्द्रसिद्धान्तचक्रवर्तिविरचितः पञ्चसंग्रहापरनामकोय गोम्मटसाराभिध सिद्धान्तग्रन्थः, जैनसमाजेऽत्यादरणीयोऽस्ति । स च जैनसिद्धान्तापूर्वरहस्यप्रकाशनेऽनुपमदिवाकर इवाभाति । अस्योपरि कतिपयैराचार्यवर्यैः टीका निर्मिताः पर तास्विदानीं द्वे उपलभ्येते, एका **केशववर्णीया** वृत्ति या च श्रीचामुण्डरायकृतकर्णाटकीयवृत्तित उद्धृता, उक्त च तेन टीकारम्भे **"नेमिचन्द्रं जिनं नत्वा सिद्ध श्रीज्ञानभूपणम् । वृत्तिं गोम्मटसारस्य कुर्वे कर्णाटवृत्तितः"** इति । अपरा च **मन्दप्रबोधिनी** नामधेया श्रीमदभयचन्द्रसिद्धान्तचक्रवर्तिभिर्विरचिता, उक्त च कर्त्री **"मुनिं सिद्धं प्रणम्याहं नेमिचन्द्रं जिनेश्वरम् । टीकां गोम्मटसारस्य कुर्वे मन्दप्रबोधिकाम्"** इति ॥ यद्यपीय पूर्वटीकातः स्वल्पा तथापि बालानामतीवोपकारिका इति नामत एव स्फुट ज्ञायते । इमे आश्रित्य भव्योपकारक जैनसमाजकमलदिवाकरश्रीमद्विद्वद्वर-**टोडरमल्ल**पादैर्भाषाटीका निर्मिता । यामाश्रित्य भव्या जैनसिद्धान्तरहस्य विज्ञायानन्दाम्बुधौ निर्मग्ना भवन्ति । अधुनाहमस्मिन्विषये विशेष न विवक्षामि पर भवत्समक्ष दिग्दर्शनमेव कारयामि यदि 'ग्रन्थकर्तुर्जीवनचरित्रादिदिदृक्षा भवेत्तदा मुद्रितवृहद्द्रव्यसंग्रहतोऽवगन्तव्यम् । अथवास्योत्तरार्द्धस्य कर्मकाण्डस्य मुद्रणार्थं ये केपि सज्जनाः कृपा विधास्यन्ति तदा तस्य प्रस्तावनाया दरीदृक्ष्यते । मया द्वित्रान् ग्रन्थानाश्रित्य तथा सिद्धान्तशास्त्रपाठकगुरुवर्य्यस्याद्वादवारिधिविद्वच्छिरोमणिगोपालदासजीवर्य्यैरेतत्यालस्यस्य महत्कृपया प्रेरणया च अधुना एनमपूर्वं ग्रन्थरत्नमुत्थानिकाछायोपेत क्वचित्क्वचिट्टिप्पणीभिरलङ्कृतं

च पाठकानां पुरत उपस्थापयामि विशेषतया ददामि च धन्यवादं श्रीमच्छ्रे छिवैर्यगांधीनाथारङ्गजी तिनामकं यत्तैरेन ग्रन्थं मुद्रयित्वा व्ययानुकूलमेव मूल्य संस्थाप्य सर्वे सज्जना उपकृताः, आशासे चेदृशमनुकरणमन्ये धनाढ्या अपि विधास्यन्ति। अन्ते चेत्येव प्रार्थये यत्प्रमादाद् दृष्टिदोपादन्यैश्च वहुभिः कारणैरशुद्धयो जाताश्चेत् तर्हि क्षमाशीलाः सिद्धान्तशास्त्रज्ञातारोऽल्पवुद्धिं मां विज्ञाय शुद्धतापूर्वकं पठनपाठन कुर्वन्तुतराम्, अय च मम प्रथमप्रयास इति त्रुटिसम्भावनयावश्यमेव भाव्यमतः पाठकमहाशयाः कृपा विधाय क्षमिष्यन्तीत्याशासे—इति, विज्ञेषु कृत पल्लवितेन।

वंबई
वैशाख कृष्णा तृतीया।
वीरनिर्वाण स. २४३७।

जैनाचार्यचरणसरोजचञ्चरीक,
**मनोहरलालः।**

नमः श्रीवीतरागाय ।

अथ उत्थानिकाछायासहितः

# गोम्मटसारः ।

अथ श्रीमन्नेमिचन्द्राचार्यो गोम्मटसारपञ्चसंग्रहप्रपञ्चमारचयंस्तदादौ निर्विघ्नतः शास्त्रपरिसमाप्तिनिमित्तं नास्तिकतापरिहारार्थं शिष्टाचारपरिपालनार्थमुपकारस्मरणार्थं चेष्टदेवताविशेषं नमस्कुर्वन्नभिधेयप्रतिज्ञां प्रकाशयंश्च सिद्धमित्यादिगाथासूत्रमाह,—

**सिद्धं सुद्धं पणमिय जिणिंदवरणेमिचंदमकलंकं ।**
**गुणरयणभूसणुदयं जीवस्स परूवणं वोच्छं ॥ १ ॥**

सिद्धं शुद्धं प्रणम्य जिनेन्द्रवरनेमिचन्द्रमकलङ्कम् ।
गुणरत्नभूषणोदयं जीवस्य प्ररूपणं वक्ष्ये ॥ १ ॥

एवं नमस्कारात्मकं मङ्गलं कृत्वा प्रकृतजीवप्ररूपणस्याधिकारान्निर्दिशति;—

**गुणजीवापज्जत्ती पाणा सण्णा य मग्गणाओ य ।**
**उवजोगोवि य कमसो वीसं तु परूवणा भणिदा ॥२॥**

[3]गुणजीवाः पर्याप्तयः प्राणाः सञ्ज्ञाश्च मार्गणाश्च ।
उपयोगोपि च क्रमशः विंशतिस्तु प्ररूपणा भणिताः ॥ २ ॥

---

१. अस्य द्वितीयनाम पञ्चसंग्रहं बंधकबध्यमानौ बंधस्वामिहेतुभेदाश्चेति पञ्च तेषां संग्रहो यत्र । २ सप्तार्थकमिदं गाथासूत्रम् । ३ गुणस्थानानि जीवसमासाश्च ।

अथ संग्रहनयापेक्षया प्ररूपणाद्वैविध्यं गनसि भृत्वा गुणस्थानमार्गणा-स्थानप्ररूपणयो. सज्ञान्तरमाह;—

**संखेओ ओघोत्ति य गुणसण्णा सा च मोहजोगभवा।**
**वित्थारो देसोत्ति य मग्गणसण्णा स कम्मभवा॥३॥**

संक्षेप ओघ इति च गुणसंज्ञा सा च मोहयोगभवा।
विस्तार आदेश इति च मार्गणासंज्ञा सा कर्मभवा॥ ३॥

अथ प्ररूपणाद्वैविध्ये शेषप्ररूपणानामन्तर्भाव प्रदर्शयति —

**आदेसे संलीणा जीवा पज्जत्तिपाणसण्णाओ।**
**उवजोगोवि य भेदे वीसं तु परूवणा भणिदा॥ ४॥**

आदेशे संलीना जीवाः पर्याप्तिप्राणसंज्ञा.।
उपयोगोपि च भेदे विंशतिस्तु प्ररूपणा भणिताः॥ ४॥

अथ कस्या मार्गणाया का प्ररूपणान्तर्भूतेति चेद्गाथात्रयेणाह;—

**इंदियकाये लीणा जीवा पज्जत्तिआणभासमणो।**
**जोगे काओ णाणे अक्खा गदिमग्गणे आऊ॥ ५॥**

इन्द्रियकाये लीना जीवाः पर्याप्त्यानभाषामनः।
योगे कायो ज्ञाने अक्षीणि गतिमार्गणायामायुः॥ ५॥

**मायालोहे रदिपुव्वाहारं कोहमाणगम्हि भयं।**
**वेदे मेहुणसण्णा लोहम्हि परिग्गहे सण्णा॥ ६॥**

मायालोभे रतिपूर्वाहारं क्रोधमानके भयम्।
वेदे मैथुनसंज्ञा लोभे परिग्रहः संज्ञा॥ ६॥

**सागारो उवजोगो णाणे मग्गम्हि दंसणे मग्गे।**
**अणगारो उवजोगो लीणोत्ति जिणेहिं णिद्दिट्ठं॥ ७॥**

साकार उपयोगो ज्ञाने मार्गणे दर्शने मार्गणे।
अनाकार उपयोगो लीन इति जिनैर्निर्दिष्टम्॥ ७॥

अथ तासां विंशतिप्ररूपणानां मध्ये प्रथमोद्दिष्टगुणस्थानप्ररूपणाप्रतिपादनार्थं प्रथम गुणस्थानशब्दस्य निरुक्तिपूर्वकमर्थं कथयति,—

**जेहिं दु लक्खिज्जंते उदयादिसु संभवेहिं भावेहिं ।**
**जीवा ते गुणसण्णा णिद्दिट्ठा सव्वदरसीहिं ॥ ८ ॥**

यैस्तु लक्ष्यन्ते उदयादिषु सभवैर्भावैः ।
जीवास्ते गुणसंज्ञा निर्दिष्टाः सर्वदर्शिभिः ॥ ८ ॥

अथ तानि गुणस्थानानि गाथाद्वयेनोद्दिशति,—

**मिच्छो सासण मिस्सो अविरदसम्मो य देसविरदो य।**
**विरदा पमत्त इदरो अपुव्व अणियट्ठ सुहुमो य ॥९॥**

मिथ्यात्वं सासादनो मिश्र अविरतसम्यक्त्वं च देशविरतश्च ।
विरतः प्रमत्त इतर अपूर्व अनिवृत्तः सूक्ष्मश्च ॥ ९ ॥

**उवसंतखीणमोहो सजोगकेवलिजिणो अजोगी य ।**
**चउदस जीवसमासा कमेण सिद्धा य णादव्वा॥१०॥**

उपशान्तक्षीणमोह. सयोगकेवलिजिन अयोगी च ।
चतुर्दश जीवसमासाः क्रमेण सिद्धाश्च ज्ञातव्याः ॥ १० ॥

अथ गुणस्थानेषु औदयिकादिभावानां सभव दर्शयति,—

**मिच्छे खलु ओदइओ विदिए पुण पारिणामिओ भावो**
**मिस्से खओवसमिओ अविरदसम्मम्हि तिण्णेव॥११**

मिथ्यात्वे खलु औदयिको द्वितीये पुनः पारिणामिको भावः ।
मिश्रे क्षायोपशमिक अविरतसम्यक्त्वे त्रय एव ॥ ११ ॥

---

१ जीवा समस्यन्ते सक्षिप्यन्ते एषु ते । अत्र प्रकरणसामर्थ्येन गुणस्थानान्येवोच्यन्ते ।

एषामुक्तभावाना संभवनियमस्य निमित्त गाथात्रयेण दर्शयति;—

**एदे भावा णियमा दंसणमोहं पडुच्च भणिदा हु ।**
**चारित्तं णत्थि जदो अविरदअंतेसु ठाणेसु ॥ १२ ॥**

एते भावा नियमाद्दर्शनमोहं प्रतीत्य भणिता हि ।
चारित्रं नास्ति यतो अविरतान्तेषु स्थानेषु ॥ १२ ॥

**देसविरदे पमत्ते इदरे य खओवसमियभावो दु ।**
**सो खलु चरित्तमोहं पडुच्च भणियं तहा उवरिं ॥ १३ ॥**

देशविरते प्रमत्ते इतरे च क्षायोपशमिकभावस्तु ।
स खलु चारित्रमोहं प्रतीत्य भणितः तथा उपरि ॥ १३ ॥

**तत्तो उवरिं उवसमभावो उवसामगेसु खवगेसु ।**
**खइओ भावो णियमा अजोगिचरिमोत्ति सिद्धे य॥१४॥**

तत उपरि उपशमभाव उपशामकेषु क्षपकेषु ।
क्षायिको भावो नियमादयोगिचरिम इति सिद्धे च ॥ १४ ॥

अथ प्रागुद्दिष्टचतुर्दशगुणस्थानेषु प्रथमोद्दिष्टमिथ्यादृष्टिगुणस्थानस्य स्वरू
प्ररूपयति;—

**मिच्छोदयेण मिच्छत्तमसद्दहणं तु तच्चअत्थाणं ।**
**एयंतं विवरीयं विणयं संसयिदमण्णाणं ॥ १५ ॥**

मिथ्यात्वोदयेन मिथ्यात्वमश्रद्धानं तु तत्त्वार्थानाम् ।
एकान्तं विपरीतं विनयं संशयितमज्ञानम् ॥ १५ ॥

अथैषां पञ्चानामुदाहरणान्युद्दिशति;—

**एयंत बुद्धदरसी विवरीयो बह्म तावसो विणओ ।**
**इंदोवि य संसइओ मक्कडिओ चेव अण्णाणी ॥ १६ ॥**

एकान्तो बुद्धदर्शी विपरीतो ब्रह्म[1] तापसो विनयः ।
ईन्द्रोपि[2] च संशयितो मस्करी चैवाज्ञानी ॥ १६ ॥

अथातत्त्वश्रद्धानलक्षण निरूपयति,—

**मिच्छत्तं वेदंतो जीवो विवरीयदंसणो होदि ।**
**ण य धम्मं रोचेदि हु महुरं खु रसं जहा जरिदो॥१७॥**

मिथ्यात्वं वेदयन् जीवो विपरीतदर्शनो भवति ।
न च धर्मं रोचते हि मधुरं खलु रसं यथा ज्वरितः ॥१७॥

इदमेव वस्तुस्वभावाश्रद्धान स्पष्टयति;—

**मिच्छाइट्ठी जीवो उवइट्ठं पवयणं ण सद्दहदि ।**
**सद्दहदि असब्भावं उवइट्ठं वा अणुवइट्ठं ॥ १८ ॥**

मिथ्यादृष्टिर्जीव उपदिष्टं प्रवचनं न श्रद्धाति ।
श्रद्धाति असद्भावमुपदिष्टं वाऽनुपदिष्टम् ॥ १८ ॥

अथ सासादनगुणस्थानस्वरूप सूत्रद्वयेनाह;—

**आदिमसम्मत्तद्धा समयादो छावलित्ति वा सेसे ।**
**अणअण्णदरुदयादो णासियसम्मोत्ति सासणक्खोसो**

आदिमसम्यक्त्वाद्धा समयतः षडावलिरिति[3] वा शेषे ।
अनोऽन्यतरोदयान्नाशितसम्यक्त्व[4] इति सासादनाख्यःसः ॥१९॥

**सम्मत्तरयणपव्वयसिहरादो मिच्छभूमिसमभिमुहो ।**
**णासियसम्मत्तो सो सासणणामो मुणेयव्वो ॥ २० ॥**

सम्यक्त्वरत्नपर्वतशिखरान्मिथ्यात्वभूमिसमभिमुखः ।
नाशितसम्यक्त्वः स सासननामा[5] मन्तव्यः ॥ २० ॥

---

१. याज्ञिकब्राह्मण· । २ इन्द्रो नाम श्वेताम्बरगुरु । ३ आवलिरिति व्यवहारकालसज्ञा सा चाग्रे स्फुटीभविष्यति । ४. अनन्तानुवन्धिकषायः । ५ सासादनम् ।

अथ सम्यग्मिथ्यादृष्टिगुणस्थानस्वरूपं गाथाचतुष्टयेनाह;—

**सम्मामिच्छुदयेण य जत्तंतरसव्वघादिकज्जेण ।**
**ण य सम्मं मिच्छंपि य सम्मिस्सो होदि परिणामो २१**

सम्यग्मिथ्यात्वोदयेन च जात्यन्तरसर्वघातिकार्येण ।
न च सम्यक्त्वं मिथ्यात्वमपि च सम्मिश्रो भवति परिणामः २१

**दहिगुडमिव वामिस्सं पुहभावं णेव कारिदुं सक्कं ।**
**एवं मिस्सयभावो सम्मामिच्छोत्ति णादव्वो ॥ २२ ॥**

दधिगुडमिव व्यामिश्रं पृथग्भावं नैव कर्तुं शक्यम् ।
एवं मिश्रकभावः सम्यग्मिथ्यात्वमिति ज्ञातव्यः ॥ २२ ॥

**सो संजमं ण गिण्हदि देसजमं वा ण बंधदे आउं ।**
**सम्मं वा मिच्छं वा पडिवज्जिय मरदि णियमेण॥२३॥**

स संयमं न गृह्णाति देशयमं वा न बध्नाति आयुः ।
सम्यक्त्वं वा मिथ्यात्वं वा प्रतिपद्य म्रियते नियमेन ॥ २३॥

**सम्मत्तमिच्छपरिणामेसु जहिं आउगं पुरा बद्धं ।**
**तहिं मरणं मरणंतसमुग्घादोवि य ण मिस्सम्हि॥२४॥**

सम्यक्त्वमिथ्यात्वपरिणामयोर्यस्मिन्नायुष्कं पुरा बद्धम् ।
तस्मिन्मरणं मारणान्तसमुद्घातो[1]पि च न मिश्रे ॥ २४ ॥

अथासंयतगुणस्थानस्वरूपं निरूपयति;—

**सम्मत्तदेसघादिस्सुदयादो वेदगं हवे सम्मं ।**
**चलमलिणमगाढं तं णिच्चं कम्मक्खवणहेदू ॥ २५ ॥**

सम्यक्त्वदेशघातेरुदयाद्वेदकं[2] भवेत्सम्यक्त्वम् ।
चलमलिनमगाढं तन्नित्यं कर्मक्षपणहेतुः ॥ २५ ॥

---

१. मूलशरीरमत्यक्त्वा जीवप्रदेशाना वहिर्निगमन समुद्घातम् सप्तविध तस्यान्तर्भेद. । २ क्षायोपशमिकम् ।

तत्रौपशमिकक्षायिकसम्यक्त्वयोरुत्पत्तिकारण स्वरूप च प्रतिपादयति;—

**सत्तण्हं उवसमदो उवसमसम्मो खयादु खइओ य।**
**बिदियकसायुदयादो असंजदो होदि सम्मो य ॥२६॥**

सप्तानामुपशमत उपशमसम्यक्त्वं क्षयात्क्षायिकं च।[1]
द्वितीयकषायोदयादसंयतं भवति सम्यक्त्वं च ॥ २६ ॥

अथ तत्त्वार्थश्रद्धानस्य ग्रहणत्यागावसर गाथाद्वयेन प्ररूपयति,—

**सम्माइट्ठी जीवो उवइट्ठं पवयणं तु सद्दहदि।**
**सद्दहदि असब्भावं अजाणमाणो गुरुणियोगा ॥२७॥**

सम्यग्दृष्टिर्जीव उपदिष्ट प्रवचनं तु श्रद्धाति।
श्रद्धाति चासद्भावमजानन् गुरुनियोगाद् ॥ २७ ॥

**सुत्तादो तं सम्मं दरसिज्जंतं जदा ण सद्दहदि।**
**सो चेव हवइ मिच्छाइट्ठी जीवो तदो पहुदी ॥ २८ ॥**

सूत्रात्तं सम्यग्दर्शयन्तं यदा न श्रद्धाति।
स चैव भवति मिथ्यादृष्टिर्जीवस्ततः प्रभृति ॥ २८ ॥

अथासयतत्वसम्यग्दृष्टित्वयोः सामानधिकरण्य प्रदर्शयति;—

**णो इंदिएसु विरदो णो जीवे थावरे तसे वापि।**
**जो सद्दहदि जिणुत्तं सम्माइट्ठी अविरदो सो ॥ २९ ॥**

नो इन्द्रियेपु विरतो नो जीवे स्थावरे त्रसे वापि।
यः श्रद्धाति जिनोक्तं सम्यग्दृष्टिरविरतः सः ॥ २९ ॥

अथ देशसयतगुणस्थान गाथाद्वयेन निर्दिशति;—

**पच्चक्खाणुदयादो संजमभावो ण होदि णवरिं दु।**
**थोववदो होदि तदो देसवदो होदि पंचमओ ॥ ३० ॥**

---

१. अनतानुबन्धिचतुष्टयदर्शनमोहनीयत्रयेतिसप्त, इदं सादिमिथ्यादृष्ट्यपेक्षयोक्तम्, अनादिमिथ्यादृष्ट्यपेक्षया तु अनतानुबन्धिचतुष्टयमिथ्यात्वदर्शनमोहनीयैकेति पञ्च।

प्रत्याख्यानोदयात् संयमभावो न भवति नवरिं तु ।
स्तोकव्रतो भवति देशव्रतो भवति पञ्चमः ॥ ३० ॥

**जो तसवहादु विरदो अविरदओ तह य थावरवहाओ।**
**एकसमयम्हि जीवो विरदाविरदो जिणेक्कमई ॥ ३१ ॥**

यः त्रसवधात् विरत अविरतस्तथा च स्थावरवधात् ।
एकसमये जीवो विरताऽविरतो जिनैकमतिः ॥ ३१ ॥

अथ प्रमत्तगुणस्थान गाथाद्वयेनाह;—

**संजलणणोकसायाणुदयादो संजमो हवे जम्हा ।**
**मलजणणपमादोवि य तम्हा हु पमत्तविरदो सो॥३२॥**

संज्वलननोकषायाणामुदयात् संयमो भवेद्यस्मात् ।
मलजननप्रमादोपि च तस्मात् हि प्रमत्तविरतः सः ॥ ३२ ॥

**वत्तावत्तपमादे जो वसइ पमत्तसंजदो होदि ।**
**सयलगुणसीलकलिओ महव्वई चित्तलायरणो ॥३३॥**

व्यक्ताव्यक्तप्रमादे यो वसति प्रमत्तसयतो भवति ।
सकलगुणशीलकलितो महाव्रती चित्रलाचरणः ॥ ३३ ॥

अथ तेषा प्रमादाना नामसख्याप्रदर्शनार्थमाह;—

**विकहा तहा कसाया इंदियणिद्दा तहेव पणओ य ।**
**चदु चदु पणमेगेगं होंति पमादा हु पण्णरसा ॥ ३४॥**

विकथाः तथा कषाया इन्द्रियनिद्रा तथैव प्रणयश्च ।
चतुश्चतुःपञ्चैकैकं भवन्ति प्रमादा हि पञ्चदश ॥ ३४ ॥

अथैषां प्रमादानां प्रकारान्तरेण सख्यादिपञ्चप्रत्ययान् प्ररूपयति;—

**संखा तह पत्थारो परियट्टण णट्ठ तह समुद्दिट्ठं ।**
**एदे पंच पयारा पमदसमुक्कित्तणे णेया ॥ ३५ ॥**

---

१. स्नेहः ।

संख्या तथा प्रस्तार. परिवर्तनं नष्टं तथा समुद्दिष्टम् ।
एते पञ्च प्रकाराः प्रमादसमुत्कीर्तने ज्ञेयाः ॥ ३५ ॥

अथ विशेषसंख्योत्पत्तिक्रममाह;—

**सव्वेपि पुव्वभंगा उवरिमभंगेसु एक्कमेक्केसु ।**
**मेलंतित्ति य कमसो गुणिदे उप्पज्जदे संखा ॥ ३६ ॥**

सर्वेपि पूर्वभङ्गा[1] उपरिमभङ्गेषु एकैकेषु ।
मिलन्ति इति च क्रमशो गुणिते उत्पद्यते संख्या ॥ ३६ ॥

अथ प्रस्तारक्रम प्रदर्शयति;—

**पढमं पमदपमाणं कमेण णिक्खिविय उवरिमाणं च ।**
**पिंडं पडि एक्केक्कं णिक्खित्ते होदि पत्थारो ॥ ३७ ॥**

प्रथम प्रमादप्रमाणं क्रमेण निक्षिप्य उपरिमाणं च ।
पिण्डं प्रति एकैकं निक्षिप्ते भवति प्रस्तारः ॥ ३७ ॥

अथ प्रस्तारान्तरं प्रदर्शयति;—

**णिक्खित्तु बिदियमेत्तं पढमं तस्सुवरि बिदियमेक्केक्कं ।**
**पिंडं पडि णिक्खेओ एवं सव्वत्थ कायव्वो ॥ ३८ ॥**

निक्षिप्त्वा द्वितीयमात्रं प्रथमं तस्योपरि द्वितीयमेकैकम् ।
पिण्डं प्रति निक्षेप एवं सर्वत्र कर्तव्यः ॥ ३८ ॥

अथ द्वितीयप्रस्तारापेक्षयाऽक्षपरिवर्तनक्रममाह;—

**पढमक्खो अंतगदो आदिगदे संकमेदि बिदियक्खो ।**
**दोण्णिवि गंतूणंतं आदिगदे संकमेदि तदियक्खो ३९**

प्रथमोक्ष[2] अन्तगत आदिगते संक्रामति द्वितीयाक्षः ।
द्वावपि गत्वान्तमादिगते संक्रामति तृतीयाक्षः ॥ ३९ ॥

---

१. भेदाः । २. प्रथमभेदः ।

अथ प्रथमप्रस्तारापेक्षयाऽक्षपरिवर्तनमाह;—

**तदियक्खो अंतगदो आदिगदे संकमेदि बिदियक्खो।**
**दोण्णिवि गंतूणंतं आदिगदे संकमेदि पढमक्खो॥४०॥**

तृतीयाक्ष अन्तगत आदिगते संक्रामति द्वितीयाक्षः।
द्वावपि गत्वान्तमादिगते संक्रामति प्रथमाक्षः॥ ४०॥

अथ नष्टानयन प्रदर्शयति,—

**सगमाणेहिं विभत्ते सेसं लक्खित्तु जाण अक्खपदं।**
**लद्धे रूवं पक्खिव सुद्धे अंते ण रूवपक्खेवो॥ ४१॥**

स्वकमानैर्विभक्ते शेषं लक्षयित्वा जानीहि अक्षपदम्।
लब्धे रूपं प्रक्षिप्य शुद्धे अन्ते न रूपप्रक्षेपः॥ ४१॥

अथोद्दिष्टस्वरूपमाह,—

**संठाविदूण रूवं उवरीदो संगुणित्तु सगमाणे।**
**अवणिज्ज अणंकिदयं कुज्जा एमेव सव्वत्थ॥ ४२॥**

संस्थाप्य रूपमुपरितः संगुणित्वा स्वकमानम्।
अपनीयानङ्कितं कुर्यात् एवमेव सर्वत्र॥ ४२॥

अथ प्रथमप्रस्ताराक्षसंचारमाश्रित्य नष्टोद्दिष्टयोर्गूढयन्त्रमाह;—

**इगिवितिच पण ख पण दस पण्णर खं वीसताल सट्ठी य**
**संठविय पमदठाणे णट्ठुद्दिट्ठं च जाण तिट्ठाणे॥ ४३॥**

एकद्वित्रिच[3]पञ्चख[4]पञ्च दश पंचदश खं विंशतिः चत्वारिंशत् षष्टिश्च।
संस्थाप्य प्रमाद[1]स्थाने नष्टोद्दिष्टं च जानीहि त्रिस्थाने॥ ४३॥

अथ द्वितीयप्रस्तारापेक्षं नष्टोद्दिष्टयोर्गूढयन्त्रमाह;—

**इगिवितिचखचडवारं ख-सोल रागट्ठदालचउसट्ठिं।**
**संठविय पमदठाणे णट्ठुद्दिट्ठं च जाण तिट्ठाणे॥४४॥**

---

१. भेदस्थानम्। २. एकम्। ३. चशब्देन चतुःसंख्या। ४. शून्यसंख्या।

एकद्वित्रिचखचाष्ट द्वादश खषोडश रागाष्टचत्वारिंशच्चतुःषष्टिम् ।
संस्थाप्य प्रमादस्थाने नष्टोद्दिष्टं च जानीहि त्रिस्थाने ॥ ४४ ॥

अथाप्रमत्तगुणस्थानस्वरूप प्ररूपयति,—

**संजलणणोकसायाणुदओ मंदो जदा तदा होदि ।**
**अपमत्तगुणो तेण य अपमत्तो संजदो होदि ॥ ४५ ॥**

संज्वलननोकषायाणामुदयो मन्दो यदा तदा भवति ।
अप्रमत्तगुणस्तेन च अप्रमत्तः सयतो भवति ॥ ४५ ॥

अथ स्वस्थानाप्रमत्तसयतस्वरूप निरूपयति,—

**णट्ठासेसपमादो वयगुणसीलोलिमंडिओ णाणी ।**
**अणुवसमओ अखवओ झाणणिलीणो हु अपमत्तो ४६**

नष्टाशेषप्रमादो व्रतगुणशीलावलिमण्डितो ज्ञानी ।
अनुपशमक अक्षपको ध्याननिलीनो हि अप्रमत्त. ॥ ४६ ॥

अथ सातिशयाप्रमत्तस्वरूपमाह;—

**इगिवीसमोहखवणुवसमणणिमित्ताणि तिकरणाणि तहिं । पढमं अधापवत्तं करणं तु करेदि अपमत्तो ॥४७॥**

एकविंशतिमोहक्षपणोपशमननिमित्तानि त्रिकरणानि तस्मिन् ।
प्रथममधःप्रवृत्तं करणं तु करोति अप्रमत्तः ॥ ४७ ॥

अथाधःप्रवृत्तकरणस्य निरुक्तिसिद्ध लक्षण कथयति,—

**जम्हा उवरिमभावा हेट्ठिमभावेहिं सरिसगा होंति ।**
**तम्हा पढमं करणं अधापवत्तोत्ति णिद्दिट्ठं ॥ ४८ ॥**

---

१ राग इत्यक्षरद्वयेन द्वात्रिंशत्सख्या वोध्या कपटपयपुरस्थेति वक्ष्यमाण-टिप्पणीगतनियमेनाक्षराणा सख्यावोधकत्वनियमात् । २ अन्तिमभेदद्वयस्यै-कैकसख्याकत्वेन गुणितेपि पूर्वसख्याया अविशेषात् त्रीण्येव स्थानानि गृहीतानि ।

यस्मादुपरितनभावा अधस्तनभावैः सदृशा भवन्ति ।
तस्मात् प्रथमं करणमधःप्रवृत्तमिति निर्दिष्टम् ॥ ४८ ॥

अथाधःप्रवृत्तकरणकालप्रमाणं कथयति;—

**अंतोमुहुत्तमेत्तो तक्कालो होदि तत्थ परिणामा ।**
**लोगाणमसंखमिदा उवरुवरिं सरिसवड्ढिगया ॥ ४९ ॥**

अन्तर्मुहूर्तमात्रस्तत्कालो भवति तत्र परिणामाः ।
लोकानामसंख्यमिता उपर्युपरि सदृशवृद्धिगताः ॥ ४९ ॥

इदानीमपूर्वकरणगुणस्थानमाह,—

**अंतोमुहुत्तकालं गमिऊण अधापवत्तकरणं तं ।**
**पडिसमयं सुज्झंतो अपुव्वकरणं समल्लियइ ॥ ५० ॥**

अन्तर्मुहूर्तकालं गमयित्वा अधःप्रवृत्तकरणं तत् ।
प्रतिसमयं शुद्ध्यन् अपूर्वकरणं समाश्रयति ॥ ५० ॥

अथैतस्य निरुक्त्या लक्षणमाह;—

**एदम्हि गुणट्ठाणे विसरिससमयट्ठियेहिं जीवेहिं ।**
**पुव्वमपत्ता जम्हा होंति अपुव्वा हु परिणामा ॥ ५१ ॥**

एतस्मिन् गुणस्थाने विसदृशसमयस्थितैर्जीवैः ।
पूर्वमप्राप्ता यस्मात् भवन्ति अपूर्वा हि परिणामाः ॥ ५१ ॥

तस्यैवकालविशेषनियममाह गाथाद्वयेन;—

**भिण्णसमयट्ठियेहिं दु जीवेहिं ण होदि सव्वदा सरिसो**
**करणेहिं एकसमयट्ठियेहिं सरिसो विसरिसो वा ॥ ५२ ॥**

---

१ असंख्यातप्रदेशो लोकस्तस्यासंख्यातेन गुणकारे यल्लब्धं तावन्मात्राः ।
२. मुहूर्तस्य परिमाणमग्रे स्फुटीभविष्यति, मुहूर्तस्य मध्यभेदोन्तर्मुहूर्तः ।
३. परिणामः ।

भिन्नसमयस्थितैस्तु जीवैः न भवति सर्वदा सादृश्यम् ।
करणैः एकसमयस्थितैः सादृश्यं विसादृश्यं वा ॥ ५२ ॥

**अंतोमुहुत्तमेत्ते पडिसमयमसंखलोगपरिणामा ।**
**कमउड्ढापुव्वगुणे अणुकट्ठी णत्थि णियमेण ॥ ५३ ॥**

अन्तर्मुहूर्तमात्रे प्रतिसमयमसंख्यलोकपरिणामाः ।
क्रमवृद्धा अपूर्वगुणे अनुकृष्टिर्नास्ति नियमेन ॥ ५३ ॥

एवंविधस्यापूर्वकरणपरिणामस्य कार्यविशेष गाथाद्वयेनाह;—

**तारिसपरिणामट्ठियजीवा हु जिणेहिं गलियतिमिरेहिं ।**
**मोहस्सपुव्वकरणा खवणुवसमणुज्जया भणिया ॥५४॥**

तादृशपरिणामस्थितजीवा हि जिनैर्गलिततिमिरैः ।
मोहस्यापूर्वकरणाः क्षपणोपशमनोद्यता भणिताः ॥ ५४ ॥

**णिद्दापयले णट्ठे सदि आऊ उवसमंति उवसमया ।**
**खवयं ढुक्के खवया णियमेण खवन्ति मोहं तु ॥ ५५॥**

निद्राप्रचले नष्टे सति आयुषि उपशमयन्ति उपशमकाः ।
क्षपकं ढौकमाना क्षपका नियमेन क्षपयन्ति मोहं तु ॥ ५५ ॥

अथानिवृत्तिकरणगुणस्थानस्वरूप गाथाद्वयेनाह,—

**एकम्हि कालसमये संठाणादीहिं जह णिवट्टंति ।**
**ण णिवट्टंति तहावि य परिणामेहिं मिहो जे हु ॥५६॥**

एकस्मिन् कालसमये संस्थानादिभिः यथा निवर्तन्ते ।
न निवर्तन्ते तथापि च परिणामैर्मिथो ये हि ॥ ५६ ॥

---

१ अनुकृष्टिर्नाम अधस्तनसमयपरिणामखण्डानामुपरितनसमयपरिणामखंडै: सादृश्यम् । २. आरोहमाणा ।

होंति अणियट्टिणो ते पडिसमयं जेस्सिमेक्कपरिणामो।
विमलयरझाणहुयवहसिहाहिं णिद्दड्ढकम्मवणा ॥५७॥

भवन्ति अनिवर्तिनस्ते प्रतिसमयं येषामेकपरिणामः।
विमलतरध्यानहुतवहशिखाभिर्निदग्धकर्मवनाः ॥ ५७ ॥

अथ सूक्ष्मसाम्परायगुणस्थानस्वरूपमाह,—

धुव-कोसुंभयवत्थं होदि जहा सुहुमरायसंजुत्तं।
एवं सुहुमकसाओ सुहुमसरागोत्ति णादव्वो ॥ ५८ ॥

धौतकौसुम्भकवस्त्रं भवति यथा सूक्ष्मरागसंयुक्तम्।
एवं सूक्ष्मकषायः सूक्ष्मसराग इति ज्ञातव्यः ॥ ५८ ॥

अथ सूक्ष्मकृष्टिगतस्वरूप गाथाद्वयेन निरूपयति;—

पुव्वापुव्वप्फड्डयबादरसुहुमगयकिट्टिअणुभागा।
हीणकमाणंतगुणेणवराडु वरं च हेट्ठस्स ॥ ५९ ॥

पूर्वापूर्वस्पर्द्धकबादरसूक्ष्मगतकृष्ट्यनुभागाः।
हीनक्रमा अनन्तगुणेन अवरात्तु वरं चाधस्तनस्य ॥ ५९ ॥

अणुलोहं वेदंतो जीवो उवसामगो व खवगो वा।
सो सुहुमसंपराओ जहखादेणूणओ किंचि ॥ ६० ॥

अनुलोभं विदन् जीव उपशामको वा क्षपको वा।
स सूक्ष्मसांपरायो यथाख्यातेनोनः किंचित् ॥ ६० ॥

अथोपशान्तकषायगुणस्थानस्वरूप निर्दिशति,—

कदकफलजुदजलं वा सरए सरवाणियं व णिम्मलयं।
सयलोवसंतमोहो उवसंतकसायओ होदि ॥ ६१ ॥

कतकफलयुतजलं वा शरदि सर पानीयं व निर्मलम्।
सकलोपशान्तमोह उपशान्तकषायको भवति ॥ ६१ ॥

अथ क्षीणकषायगुणस्थानस्वरूपमाह;—

णिस्सेसखीणमोहो फलिहामलभायणुदयसमचित्तो।
खीणकसाओ भण्णदि णिग्गंथो वीयरायेहिं ॥ ६२ ॥

निःशेषक्षीणमोहः स्फटिकामलभाजनोदकसमचित्तः ।
क्षीणकषायो भण्यते निर्ग्रन्थो वीतरागैः ॥ ६२ ॥

अथ सयोगकेवलिगुणस्थानं गाथाद्वयेन कथयति;—

केवलणाणदिवायरकिरणकलावप्पणासियण्णाणो ।
णवकेवललद्धुग्गमसुजणियपरमप्पववएसो ॥ ६३ ॥

केवलज्ञानदिवाकरकिरणकलापप्रणाशिताज्ञानः ।
नवकेवललब्ध्युद्गमसुजनितपरमात्मव्यपदेशः ॥ ६३ ॥

असहायणाणदंसणसहिओ इदि केवली हु जोगेण।
जुत्तोत्ति सजोगिजिणो अणाइणिहणारिसे उत्तो६४

असहायज्ञानदर्शनसहित इति केवली हि योगेन ।
युक्त इति सयोगिजिन अनादिनिधनार्षे उक्तः ॥ ६४ ॥

अथायोगकेवलिगुणस्थान निरूपयति,—

सीलेसिं संपत्तो णिरुद्धणिस्सेसआसवो जीवो ।
कम्मरयविप्पमुक्को गयजोगो केवली होदि ॥ ६५ ॥

शीलेशित्वं संप्राप्तो निरुद्धनिःशेषास्रवो जीवः ।
कर्मरजोविप्रमुक्तो गतयोगः केवली भवति ॥ ६५ ॥

एवंविधचतुर्दशगुणस्थानेषु स्वायुर्वर्जितकर्मणां गुणश्रेणिनिर्जरातत्काल-
विशेष च गाथाद्वयेनाह,—

सम्मत्तुप्पत्तीए सावयविरदे अणंतकम्मंसे ।
दंसणमोहक्खवगे कसायउवसामगे य उवसंते ॥६६॥

**खवगे य खीणमोहे जिणेसु दव्वा असंखगुणिदकमा ।**
**तव्विवरीया काला संखेज्जगुणक्कमा होंति ॥६७॥जुम्मं॥**

सम्यक्त्वोत्पत्तौ श्रावकविरते अनन्तकर्मांशे[1] ।
दर्शनमोहक्षपके कषायोपशामके चोपशान्ते ॥ ६६ ॥
क्षपके च क्षीणमोहे जिनेषु द्रव्याण्यसंख्यगुणितक्रमाणि[2] ।
तद्विपरीताः कालाः संख्यातगुणक्रमा भवन्ति ॥ ६७ ॥ युग्मम् ॥

अथैवं सकर्मजीवानां गुणस्थानाश्रितस्वरूपं प्ररूप्य निर्जीर्णकर्मगुणस्थानातीतसिद्धपरमेष्ठिना स्वरूप मतान्तरविप्रतिपत्तिनिराकरणपूर्वक गाथाद्वयेनाह;—

**अट्ठविहकम्मवियला सीदीभूदा णिरंजणा णिच्चा ।**
**अट्ठगुणा किदकिच्चा लोयग्गणिवासिणो सिद्धा ॥६८॥**

अष्टविधकर्मविकला शीतीभूता निरञ्जना नित्याः[3] ।
अष्टगुणाः कृतकृत्याः लोकाग्रनिवासिनः सिद्धाः ॥ ६८ ॥

**सदसिवसंखो मक्कडिवुद्धो णेयाइयो य वेसेसी ।**
**ईसरमंडलिदंसणविदूसणट्ठं कयं एदं ॥ ६९ ॥**

सदाशिवसांख्यो मस्करी बुद्धो नैयायिकश्च वैशेषिकः ।
ईश्वरमण्डलिदर्शनविदूषणार्थं कृतमेतत् ॥ ६९ ॥

इति गुणस्थानप्ररूपणानामा प्रथमोऽधिकारः ।

---

१. अनन्तानुबन्धिकषायविसयोजके । २ कर्मयोग्यपुद्गलद्रव्याणि । ३. सदाशिवादिपरमताभिमतनिराकरणायैतानि विशेषणानि तथाचोक्तं;—

सदाशिवः सदाकर्मा सांख्यो मुक्तं सुखोज्झितम् ।
मस्करी किल मुक्तानां मन्यते पुनरागतिम् ॥ १ ॥
क्षणिकं निर्गुणं चैव बुद्धो यौगश्च मन्यते ।
कृतकृत्यं तमीशानो मण्डली चोर्ध्वगामिनम् ॥ २ ॥
(यौगः=नैयायिक )

अथ जीवसमासप्ररूपणा कथयन्निरुक्तिपूर्वकं सामान्येन तल्लक्षणमाह;—

**जेहिं अणेया जीवा णज्जंते वहुविहावि तज्जादी ।**
**ते पुण संगहिदत्था जीवसमासात्ति विण्णेया ॥७०॥**

यैरनेके जीवा नीयन्ते वहुविधा अपि तज्जातयः ।
ते पुनः संगृहीतार्था जीवसमासा इति विज्ञेयाः ॥ ७० ॥

अथ जीवसमासोत्पत्तिनिवन्धनतल्लक्षणमाह;—

**तसचदुजुगाण मज्झे अविरुद्धेहिं जुदजादिकम्मुदये ।**
**जीवसमासा होंति हु तब्भवसारिच्छसामण्णा ॥७१**

त्रसचतुर्युगलानां मध्ये अविरुद्धैर्युतजातिकर्मोदये ।
जीवसमासा भवन्ति हि तद्भवसादृश्यसामान्याः ॥ ७१ ॥

अथ संक्षेपेण जीवसमासस्थानानि प्ररूपयति,—

**वादरसुहुमेइंदिय वितिचउरिंदिय असण्णिसण्णी य ।**
**पज्जत्ताऽपज्जत्ता एवं ते चोद्दसा होंति ॥ ७२ ॥**

वादरसूक्ष्मैकेन्द्रियं द्वित्रिचतुरिन्द्रियमसंज्ञिसंज्ञी च ।
पर्याप्तापर्याप्तौ एवं ते चतुर्दश भवन्ति ॥ ७२ ॥

अथ विस्तरेण जीवसमासान् निरूपयति,—

**भूआउतेउवाऊ णिच्चचदुग्गदिणिगोदथूलिदरा ।**
**पत्तेयपदिट्ठिदरा तसपण पुण्णा अपुण्णदुगा ॥ ७३ ॥**

भ्वप्तेजोवायवः नित्यचतुर्गतिनिगोदस्थूलेतरे ।
प्रत्येकप्रतिष्ठितेतरे त्रसपञ्च पूर्णा अपूर्णद्विकाः ॥ ७३ ॥

---

१ त्रसस्थावर वादरसूक्ष्म पर्याप्तापर्याप्त प्रत्येकसाधारणम् । २. ऊर्ध्वतासामान्यं स्थासादिपर्यायेषु मृदिव । ३ इतरनिगोद । ४. पर्याप्ताः ।

अथैषां सप्तपञ्चाशज्जीवभेदानामवान्तरभेदप्रदर्शनार्थं स्थानाद्यधिकारचतुष्टयमाह;—

**ठाणेहिं वि जोणीहिं वि देहोग्गाहणकुलाण भेदेहिं।**
**जीवसमासा सव्वे परूविदव्वा जहाकमसो ॥ ७४ ॥**

स्थानैरपि योनिभिरपि देहावगाहनकुलानां भेदैः।
जीवसमासाः सर्वे प्ररूपितव्या यथाक्रमशः ॥ ७४ ॥

अथ प्रथमोद्दिष्टजीवसमासस्थानाधिकार गाथाचतुष्टयेनाह;—

**सामण्णजीव तसथावरेसु इगिविगलसयलचरमदुगे।**
**इंदियकाये चरमं सयलदुतिचदुपणभेदजुदे ॥ ७५ ॥**

सामान्यजीवः त्रसस्थावरयोः एकविकल[1]सकल[2]चरमद्विके[3]।
इन्द्रियकाये चरमं सकलद्वित्रिचतुःपञ्चभेदयुते ॥ ७५ ॥

**पणजुगले तससहिये तसस्स दुतिचदुरपणगभेदजुदे।**
**छद्दुगपत्तेयम्हि य तसस्स तियचदुरपणगभेदजुदे ७६॥**

पञ्चयुगले त्रससहिते त्रसस्य द्वित्रिचतुःपञ्चभेदयुते।
षड्द्विकप्रत्येके च त्रसस्य त्रिकचतु.पञ्चभेदयुते ॥ ७६ ॥

**सगजुगलम्हि तसस्स य पणभंगजुदेसु होंति उणवीसा**
**एयादुणवीसोत्ति य इगिबितिगुणिदे हवे ठाणा ॥७७॥**

सप्तयुगले त्रसस्य च पञ्चभङ्गयुतेषु भवन्ति एकोनविंशतिः।
एकादेकोनविंशतिरिति च एकद्वित्रिगुणिते भवेयुः स्थानानि ॥

**सामण्णेण तिपंती पढमा बिदिया अपुण्णगे इदरे।**
**पज्जत्ते लद्धिअपज्जत्तेऽपढमा हवे पंती ॥ ७८ ॥**

सामान्येन त्रिपङ्क्तय. प्रथमा द्वितीया अपूर्णके इतरस्मिन्।
पर्याप्ते लब्ध्यपर्याप्ते अप्रथमा भवेत् पङ्क्तिः ॥ ७८ ॥

---

१. विकलेन्द्रियत्रये। २. पञ्चेन्द्रिये। ३. अन्तिमपञ्चेन्द्रियस्य समनस्कामनस्केतिभेदद्वये।

अथैकेन्द्रियविकलत्रयजीवसमाससमिश्रितपञ्चेन्द्रियगतजीवसमासस्थानविशेषान् गाथाद्वयेनाह;—

**इगिवण्णं इगिविगले असण्णिसण्णिगयजलथलखगाणं**
**गब्भभवे सम्मुच्छे दुतिगं भोगथलखगचरे दो दो॥७९**

एकपञ्चाशत् एकविकले असंज्ञिसंज्ञिगतजलस्थलखगानाम् ।
गर्भभवे संमूर्च्छे द्वित्रिकं भोगस्थलखगचरे द्वौ द्वौ ॥ ७९ ॥

**अज्जवमलेच्छमणुए तिदु भोगकुभोगभूमिजे दो दो ।**
**सुरणिरये दो दो इदि जीवसमासा हु अडणउदी ॥८०॥**

आर्यम्लेच्छमनुष्ये त्रिद्वि भोगकुभोगभूमिजे द्वौ द्वौ ।
सुरनिरये द्वौ द्वौ इति जीवसमासा हि अष्टानवतिः ॥ ८० ॥

अथ योनिप्ररूपणायां प्रथममाकारयोनिभेदानाह;—

**संखावत्तयजोणी कुम्मुण्णयवंसपत्तजोणी य ।**
**तत्थ य संखावत्ते णियमादु विवज्जिदे गब्भो ॥ ८१ ॥**

शंखावर्तकयोनिः कूर्मोन्नतवंशपत्रयोनी च ।
तत्र च शंखावर्ते नियमात् विवर्ज्यते गर्भः ॥ ८१ ॥

**कुम्मुण्णयजोणीये तित्थयरा दुविहचक्कवट्टी य ।**
**रामावि य जायंते सेसाए सेसगजणो दु ॥ ८२ ॥**

कूर्मोन्नतयोनौ तीर्थकरा द्विविधचक्रवर्तिनश्च ।
रामा अपि च जायन्ते शेषायां शेषजनस्तु ॥ ८२ ॥

अथ जन्मभेदनिर्देशपूर्वक गुणयोनीन्निर्दिशति,—

**जम्मं खलु सम्मुच्छणगब्भुववादा दु होदि तज्जोणी ।**
**सच्चित्तसीदसंउडसेदरमिस्सा य पत्तेयं ॥ ८३ ॥**

जन्म खलु संमूर्च्छनगर्भोपपादास्तु भवति तद्योनयः ।
सचित्तशीतसवृतसेतरमिश्राश्च प्रत्येकम् ॥ ८३ ॥

---

१. भोगभूमिजे । २. अपिशब्दादितरजनाश्च गृह्यन्ते ।

अथ सम्मूर्च्छनादीनां स्वामिनिर्देशं करोति;—

**पोतजरायुजअंडजजीवाणं गब्भ देवणिरयाणं।**
**उववादं सेसाणं सम्मुच्छणयं तु णिद्दिट्ठं॥ ८४॥**

पोतजरायुजाण्डजजीवानां गर्भः देवनारकाणाम्।
उपपादं शेषाणां सम्मूर्छनकं तु निर्दिष्टम्॥ ८४॥

अथ सचित्तादियोनिभेदानां सम्मूर्च्छनादिजन्मभेदेषु संभवासंभव गाथात्रयेण दर्शयति;—

**उववादे अच्चित्तं गब्भे मिस्सं तु होदि सम्मुच्छे।**
**सच्चित्तं अच्चित्तं मिस्सं च य होदि जोणी हु॥ ८५॥**

उपपादे अचित्ता गर्भे मिश्रा तु भवति सम्मूर्च्छे।
सचित्ता अचित्ता मिश्रा च च भवति योनिर्हि॥ ८५॥

**उववादे सीदुसणं सेसे सीदुसणमिस्सयं होदि।**
**उववादेयक्खेसु य संउड वियलेसु विउलं तु॥ ८६॥**

उपपादे शीतोष्णा शेषे शीतोष्णमिश्रका भवति।
उपपादैकाक्षेषु च संवृता विकलेषु विवृता तु॥ ८६॥

**गब्भजजीवाणं पुण मिस्सं णियमेण होदि जोणी हु।**
**सम्मुच्छणपंचक्खे वियलं वा विउलजोणी हु॥ ८७॥**

गर्भजजीवानां पुनः मिश्रा नियमेन भवति योनिर्हि।
सम्मूर्च्छनपञ्चाक्षे विकलं वा विवृतयोनिर्हि॥ ८७॥

अथ योनिप्रभेदसंख्योद्देशपुरस्सरमुपसंहारमाह;—

**सामण्णेण य एवं णव जोणीओ हवंति वित्थारे।**
**लक्खाण चदुरसीदी जोणीओ होंति णियमेण॥ ८८॥**

सामान्येन चैवं नव योनयो भवन्ति विस्तारे।
लक्षाणां चतुरशीतिः योनयो भवन्ति नियमेन॥ ८८॥

अथ तासां योनीनां विस्तरसंख्यां दर्शयति;—

**णिच्चिदरधादुसत्त य तरुदस वियलिंदियेसु छच्चेव ।**
**सुरणिरयतिरियचउरो चोद्दस मणुए सदसहस्सा ८९**

नित्येतरधातुसप्त च तरुदश विकलेन्द्रियेषु षट् चैव ।
सुरनिरयतिर्यक्चतस्रः चतुर्दश मनुष्ये शतसहस्राः ॥ ८९ ॥

अथ गत्याश्रयेण जन्म गाथाद्वयेनाह;—

**उववादा सुरणिरया गब्भजसम्मुच्छिमा हु णरतिरिया**
**सम्मुच्छिमा मणुस्साऽपज्जत्ता एयवियलक्खा ॥ ९० ॥**

उपपादाः सुरनिरया गर्भजसम्मूर्च्छिमा हि नरतिर्यञ्चः ।
सम्मूर्च्छिमा मनुष्या अपर्याप्ता एकविकलाक्षाः ॥ ९० ॥

**पंचक्खतिरिक्खाओ गब्भजसम्मुच्छिमा तिरिक्खाणं**
**भोगभुमा गब्भभवा णरपुण्णा गब्भजा चेव ॥ ९१ ॥**

पञ्चाक्षतिर्यञ्चो गर्भजसम्मूर्च्छिमा तिरश्चाम् ।
भोगभूमा गर्भभवा नरपूर्णा गर्भजा चैव ॥ ९१ ॥

अथौपपादिकादिषु लब्ध्यपर्याप्तकत्वस्य सभवासभवं कथयति; —

**उववादगब्भजेसु य लद्धिअपज्जत्तगा ण णियमेण ।**
**णरसम्मुच्छिमजीवा लद्धिअपज्जत्तगा चेव ॥ ९२ ॥**

औपपादिकगर्भजेषु च लब्ध्यपर्याप्तका न नियमेन ।
नरसम्मूर्च्छिमजीवा लब्ध्यपर्याप्तकाश्चैव ॥ ९२ ॥

अथ नारकादिगतिषु वेदानवधारयति,—

**णेरइया खलु संढा णरतिरिये तिण्णि होंति सम्मुच्छा**
**संढा सुरभोगभुमा पुरिसिच्छीवेदगा चेव ॥ ९३ ॥**

---

१. धातुशब्देन पृथिव्यप्तेजोवायुकायिका ज्ञेया । २ सम्मूर्च्छनमनुष्यास्तु चक्रवर्तिन. पट्टमहिषीं विना आर्यस्त्रीयोनितत्कक्षास्तनमूलान्तरेषु मूत्रपुरीषाद्यशुचिस्थानेषु चोत्पद्यन्ते ।

नारकाः खलु पण्ढा नरतिरश्चि त्रयो भवन्ति सम्मूर्च्छाः ।
पण्ढाः सुरभोगभूमाः पुरुषस्त्रीवेदकाश्चैव ॥ ९३ ॥

अथ शरीरावगाहनाश्रयेण जीवसमासान् वक्तुमनाः प्रथमं तत्सर्वजघन्योत्कृष्टशरीरावगाहनस्वामिनौ निर्दिशतिः—

**सुहुमणिगोदअपज्जत्तयस्स जादस्स तदियसमयम्हि ।**
**अंगुलअसंखभागं जहण्णमुक्कस्सयं मच्छे ॥ ९४ ॥**

सूक्ष्मनिगोदापर्याप्तकस्य जातस्य तृतीयसमये ।
अङ्गुलासंख्यातभागं जघन्यमुत्कृष्टं मत्स्ये ॥ ९४ ॥

अथेन्द्रियाश्रयेणोत्कृष्टावगाहनानां प्रमाणं तत्स्वामिनश्च निर्दिशति;—

**साहियसहस्समेकं वारं कोसूणमेकमेकं च ।**
**जोयणसहस्सदीहं पम्मे वियले महामच्छे ॥ ९५ ॥**

साधिकसहस्रमेकं द्वादश क्रोशोनमेकमेकं च ।
योजनसहस्रदीर्घं पद्मे विकले महामत्स्ये ॥ ९५ ॥

अथ पर्याप्तकद्वीन्द्रियादीनां जघन्यावगाहप्रमाणं तत्स्वामिनिर्देशं चाह;—

**वितिचपपुण्णजहण्णं अणुद्धरीकुंथुकाणमच्छीसु ।**
**सिच्छयमच्छे विंदंगुलसंखं संखगुणिदकमा ॥ ९६ ॥**

द्वित्रिचपं[1]पूर्णजघन्यमनुंधरीकुंथुकाणमक्षिकासु ।
सिक्थकमत्स्ये वृन्दाङ्गुलसंख्यं संख्यगुणितक्रमाः ॥ ९६ ॥

अथ सर्वजघन्यावगाहनादीनामुत्कृष्टावगाहनपर्यन्तानां शरीरावगाहनविकल्पाना स्वाम्यल्पबहुत्वगुणकारान् गाथापञ्चकेनाह;—

**सुहुमणिवातेआभूवातेआपुणि पदिट्ठिदं इदरं ।**
**वितिचपमादिल्लाणं एयाराणं तिसेढीय ॥ ९७ ॥**

---

१. पंचसंख्या । २. घनाङ्गुलम् ।

सूक्ष्मनिवातेआभूवातेआपुनि प्रतिष्ठितमितरत् ।
द्वित्रिचपमाद्यानामेकादशानां त्रिश्रेणयः ॥ ९७ ॥

**अपदिट्ठिदपत्तेयं बितिचपतिचवि अपदिट्ठिदं सयलं ।**
**तिचवि अपदिट्ठिदं च य सयलं बादालगुणिदकमा९८॥**

अप्रतिष्ठितप्रत्येकं द्वित्रिचपतिचद्वि अप्रतिष्ठितं सकलम् ।
त्रिचद्वि अप्रतिष्ठितं च च सकलं द्वाचत्वारिंशद्गुणितक्रमाः९८॥

**अवरमपुण्णं पढमं सोलं पुण पढमबिदियतदियोली ।**
**पुण्णिदरपुण्णयाणं जहण्णमुक्कस्समुक्कस्स ॥ ९९ ॥**

अवरमपूर्ण प्रथमं षोडश पुनः प्रथमद्वितीयतृतीयावलि. ।
पूर्णेतरपूर्णानां जघन्यमुत्कृष्टमुत्कृष्टम् ॥ ९९ ॥

**पुण्णजहण्णं तत्तो वरं अपुण्णस्स पुण्णउक्कस्सं ।**
**वीपुण्णजहण्णोत्ति अ-संखं संखं गुणं तत्तो ॥१००॥**

पूर्णजघन्यं ततो वरमपूर्णस्य पूर्णोत्कृष्टम् ।
द्विपूर्णजघन्यमिति असख्य सख्यं गुणं तत. ॥ १०० ॥

**सुहुमेदरगुणगारो आवलिपल्लाअसंखभागो दु ।**
**सट्ठाणे सेढिगया अहिया तत्थेकपडिभागो ॥ १०१ ॥**

सूक्ष्मेतरगुणकार आवलिपल्यासंख्येयभागस्तु ।
स्वस्थाने श्रेणिगता अधिकाः तत्रैकप्रतिभागः ॥ १०१ ॥

अथ सूक्ष्मनिगोदलब्ध्यपर्याप्तजघन्यावगाहनतोऽग्रतनसूक्ष्मवायुकायिकलब्ध्यपर्याप्तकजघन्यावगाहनस्य गुणकारभूतावल्यसंख्येयभागस्य चतुःस्थानवृद्ध्योत्पत्तिक्रम तन्मध्यावगाहविकल्पप्रकाराश्च गाथानवकेनाह,—

**अवरुवरि इगिपदेसे जुदे असंखेज्जभागवड्ढीए ।**
**आदी णिरंतरमदो एगेगपदेसपरिवड्ढी ॥ १०२ ॥**

---

१. अत्र नामैकदेशो नाम्नि प्रवर्तते इति लघुकरणन्यायमाश्रित्य नि–आदिवर्णैः निगोदादयो जीवा गृह्यन्ते । २ द्वीन्द्रियपर्याप्तजघन्यम् ।

अवरोपरि एकप्रदेशे युते असंख्यातभागवृद्धेः ।
आदिः निरन्तरमतः एकैकप्रदेशपरिवृद्धिः ॥ १०२ ॥

**अवरोग्गाहणमाणे जहण्णपरिमिदअसंखरासिहिदे[1] ।**
**अवरस्सुवरिं उड्ढे जेट्ठमसंखेज्जभागस्स ॥ १०३ ॥**

अवरावगाहनमाने जघन्यपरिमितासंख्यातराशिहिते ।
अवरस्योपरि वृद्धे जेष्ठमसंख्यातभागस्य ॥ १०३ ॥

**तस्सुवरि इगिपदेसे जुदे अवत्तव्वभागपारंभो[2] ।**
**वरसंखमवहिदवरे रूऊणे अवरउवरि जुदे ॥ १०४ ॥**

तस्योपरि एकप्रदेशे युते अवक्तव्यभागप्रारम्भः ।
वरसंख्यातावहितावरे[3] रूपोने अवरोपरि युते ॥ १०४ ॥

**तव्वड्ढीए चरिमो तस्सुवरिं रूवसंजुदे पढमा ।**
**संखेज्जभागउड्ढी उवरिमदो रूवपरिवड्ढी ॥ १०५ ॥**

तद्वृद्धेश्चरमः तस्योपरि रूपसंयुते प्रथमा ।
संख्यातभागवृद्धिः उपर्यतो रूपपरिवृद्धिः ॥ १०५ ॥

**अवरद्धे अवरुवरिं उड्ढे तव्वड्ढिपरिसमत्ती हु ।**
**रूवे तदुवरि उड्ढे होदि अवत्तव्वपढमपदं ॥ १०६ ॥**

अवरार्द्धे अवरोपरि वृद्धे तद्वृद्धिपरिसमाप्तिर्हि ।
रूपे तदुपरि वृद्धे भवति अवक्तव्यप्रथमपदम् ॥ १०६ ॥

**रूऊणवरे अवरस्सुवरिं संवड्ढिदे तदुक्कस्सं ।**
**तम्हि पदेसे उड्ढे पढमा संखेज्जगुणवड्ढी ॥ १०७ ॥**

रूपोनावरे अवरस्योपरि संवर्द्धिते तदुत्कृष्टम् ।
तस्मिन् प्रदेशे वृद्धे प्रथमा संख्यातगुणवृद्धिः ॥ १०७ ॥

---

१. भाजिते । २. अवक्तव्यभागवृद्धेः प्रारम्भ । ३. भाजितजघन्ये
४. एका सख्या ।

**अवरे वरसंखगुणे तच्चरिमो तम्हि रूवसंजुत्ते ।**
**उग्गाहणम्हि पढमा होदि अवत्तव्वगुणवड्ढी ॥१०८॥**

अवरे वरसंख्यगुणे तच्चरमः तस्मिन् रूपसंयुक्ते ।
अवगाहने प्रथमा भवति अवक्तव्यगुणवृद्धिः ॥ १०८ ॥

**अवरपरित्तासंखेणवरं संगुणिय रूवपरिहीणे ।**
**तच्चरिमो रूवजुदे तम्हि असंखेज्जगुणपढमं ॥ १०९ ॥**

अवरपरीतासंख्येनावरं संगुण्य रूपपरिहीने ।
तच्चरमो रूपयुते तस्मिन्नसंख्यातगुणप्रथमम् ॥ १०९ ॥

**रूवुत्तरेण तत्तो आवलियाऽसंखभागगुणगारे ।**
**तप्पाउग्गे जादे वाउस्सोग्गाहणं कमसो ॥ ११० ॥**

रूपोत्तरेण तत आवलिकाऽसंख्यभागगुणकारे ।
तत्प्रायोग्ये जाते वायोरवगाहनं क्रमशः ॥ ११० ॥

अथ शेषसर्वावगाहनस्थानाना गुणकारोत्पत्तिक्रममाह,—

**एवं उवरि वि णेओ पदेसवड्ढिक्कमो जहाजोग्गं ।**
**सव्वत्थेक्केक्कम्हि य जीवसमासाण विचाले ॥ १११ ॥**

एवमुपर्यपि ज्ञेय प्रदेशवृद्धिक्रमो यथायोग्यम् ।
सर्वत्रैकैकस्मिंश्च जीवसमासानामन्तराले ॥ १११ ॥

अथ तत्तज्जीवसमासावगाहनविकल्पप्रमाणं मत्स्यरचनयानयति,—

**हेट्ठा जेसिं जहण्णं उवरिं उक्कस्सयं हवे जत्थ ।**
**तत्थंतरगा सव्वे तेसिं उग्गाहणवियप्पा ॥ ११२ ॥**

अधस्तनं येषां जघन्यमुपरि उत्कृष्टकं भवेत् यत्र ।
तत्रान्तरगाः सर्वे तेषामवगाहनविकल्पाः ॥ ११२ ॥

अथ जीवसमासाना कुलसंख्याविशेष गाथाचतुष्केण कथयति,—

**बावीस सत्त तिण्णि य सत्त य कुलकोडिसयसहस्साइं**
**णेया पुढविदगागणिवाउक्कायाण परिसंखा ॥ ११३ ॥**

द्वाविंशतिः सप्त त्रीणि च सप्त च कुलकोटिशतसहस्राणि ।
ज्ञेया पृथिवीदकाग्निवायुकायानां परिसंख्या ॥ ११३ ॥

**कोडिसयसहस्साइं सत्तट्ठ णव य अट्ठवीसाइं ।**
**वेइंदियतेइंदियचउरिंदियहरिदकायाणं ॥ ११४ ॥**

कोटिशतसहस्राणि सप्ताष्ट नव च अष्टाविंशतिः ।
द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियहरितकायानाम् ॥ ११४ ॥

**अद्धत्तेरस बारस दसयं कुलकोडिसदसहस्साइं ।**
**जलचरपक्खिचउप्पयउरपरिसप्पेसु णव होंति ॥११५**

अर्द्धत्रयोदश द्वादश दशकं कुलकोटिशतसहस्राणि ।
जलचरपक्षिचतुष्पदोरपरिसर्पेषु नव भवन्ति ॥ ११५ ॥

**छप्पंचाधियवीसं बारस कुलकोडिसदसहस्साइं ।**
**सुरणेरइयणराणं जहाकमं होंति णेयाणि ॥ ११६ ॥**

षट्पञ्चाधिकविंशतिः द्वादश कुलकोटिशतसहस्राणि ।
सुरनैरयिकनराणां यथाक्रमं भवन्ति ज्ञेयानि ॥ ११६ ॥

अथ सर्वजीवसमासाना कुलयुतिं निर्दिशति,—

**एया य कोडिकोडी सत्ताणउदी य सदसहस्साइं ।**
**पण्णं कोडिसहस्सा सव्वंगीणं कुलाणं य ॥ ११७ ॥**

एका च कोटिकोटी सप्तनवतिश्च शतसहस्राणि ।
पञ्चाशत् कोटिसहस्राणि सर्वाङ्गिनां कुलानां च ॥ ११७ ॥

इति जीवसमासाधिकारः ।

---

अथ पर्याप्तिप्ररूपणां आरभमाणो दृष्टान्तपुरस्सर ताभिः पूर्णापूर्णत जीवानां दर्शयति,—

**जह पुण्णापुण्णाइं गिहघडवत्थादियाइं दव्वाइं ।**
**तह पुण्णिदरा जीवा पज्जत्तिदरा मुणेयव्वा ॥ ११८ ।**

यथा पूर्णापूर्णानि गृहघटवस्त्रादिकानि द्रव्याणि ।
तथा पूर्णेतरा जीवा पर्याप्तेतरा मन्तव्याः ॥ ११८ ॥

अथ पर्याप्तीनां तत्स्वामिनां च विशेषमाह,—

**आहारसरीरिंदियपज्जत्ती आणपाणभासमणो ।**
**चत्तारि पंच छप्पि य एइंदियवियलसण्णीणं ॥११९॥**

आहारशरीरेन्द्रियपर्याप्ति आनापानभाषामनः ।
चतस्रः पञ्च षडपि च एकेन्द्रियविकलसंज्ञिनाम् ॥ ११९ ॥

अथ समस्तस्वयोग्यपर्याप्तीना प्रारम्भकाल परिपूर्णताकाल चाह;—

**पज्जत्तीपट्ठवणं जुगवं तु कमेण होदि णिट्ठवणं ।**
**अंतोमुहुत्तकालेणहियकमा तत्तियालावा ॥ १२० ॥**

पर्याप्तिप्रस्थापनं[1] युगपत्तु क्रमेण भवति निष्ठापनम्[2] ।
अन्तर्मुहूर्तकालेन अधिकक्रमास्तावदालापात्[3] ॥ १२० ॥

अथ पर्याप्तनिवृत्त्यपर्याप्तकालविभागमाह,—

**पज्जत्तस्स य उदये णियणियपज्जत्तिणिट्ठिदो होदि ।**
**जाव सरीरमपुण्णं णिव्वत्तिअपुण्णगो ताव ॥१२१॥**

पर्याप्तस्य च उदये निजनिजपर्याप्तिनिष्ठितो भवति ।
यावत् शरीरमपूर्णं निर्वृत्त्यपूर्णकस्तावत् ॥ १२१ ॥

अथ लब्ध्यपर्याप्तकस्वरूप निरूपयति,—

**उदये दु अपुण्णस्स य सगसगपज्जत्तियं ण णिट्ठवदि ।**
**अंतोमुहुत्तमरणं लद्धिअपज्जत्तगो सो दु ॥ १२२ ॥**

उदये तु अपूर्णस्य च स्वकस्वकपर्याप्तीर्न निष्ठापयति ।
अन्तर्मुहूर्तमरणं लब्ध्यपर्याप्तकः स तु ॥ १२२ ॥

---

१. आरम्भ । २. समाप्ति । ३ सामान्यकथनात् ।

अथैकेन्द्रियादिसञ्ज्ञिपञ्चेन्द्रियपर्यन्तलब्ध्यपर्याप्तकजीवेषु सर्वनिरंतरजन्म-मरणकालप्रमाणमाह;—

**तिण्णिसया छत्तीसा छावट्ठिसहस्सगाणि मरणाणि ।**
**अंतोमुहुत्तकाले तावदिया चेव खुद्दभवा ॥ १२३ ॥**

त्रिशतानि षट्त्रिंशत् षट्षष्टिसहस्रकाणि मरणानि ।
अन्तर्मुहूर्तकाले तावन्तश्चैव क्षुद्रभवाः ॥ १२३ ॥

अथ तन्मरणजन्मनामेकेन्द्रियादिजीवसंभविना प्रमाणमाह;—

**सीदी सट्ठी तालं वियले चउवीस होंति पंचक्खे ।**
**छावट्ठिं च सहस्सा सयं च वत्तीसमेयक्खे ॥ १२४ ॥**

अशीतिः षष्टिः चत्वारिंशद्विकले चतुर्विंशतिर्भवन्ति पञ्चाक्षे ।
षट्षष्टिश्च सहस्राणि शतं च द्वात्रिंशमेकाक्षे ॥ १२४ ॥

अथैकेन्द्रियलब्ध्यपर्याप्तकस्य निरन्तरक्षुद्रभवसंख्यां स्वामिभेदानाश्रित्य विभजति;—

**पुढविदगागणिमारुदसाहारणथूलसुहुमपत्तेया ।**
**एदेसु अपुण्णेसु य एक्केक्के बार खं छक्कं ॥ १२५ ॥**

पृथ्वीदकाग्निमारुतसाधारणस्थूलसूक्ष्मप्रत्येकाः ।
एतेषु अपूर्णेषु च एकैकस्मिन् द्वादश खं षट्कम् ॥ १२५ ॥

अथ समुद्घातकेवलिनि अपर्याप्तत्वसंभवमाह;—

**पज्जत्तसरीरस्स य पज्जत्तुदयस्स कायजोगस्स ।**
**जोगिस्स अपुण्णत्तं अपुण्णजोगो त्ति णिद्दिट्ठं ॥१२६**

पर्याप्तशरीरस्य च पर्याप्त्युदयस्य काययोगस्य ।
योगिन अपूर्णत्वमपूर्णयोग इति निर्दिष्टम् ॥ १२६ ॥

अथ लब्ध्यपर्याप्तादीनां गुणस्थानेषु सभवासंभवप्रकारमाह—

**लद्धिअपुण्णं मिच्छे तत्थवि बिदिये चउत्थछट्ठे य।**
**णिव्वत्तिअपज्जत्ती तत्थवि सेसेसु पज्जत्ती ॥ १२७ ॥**

लब्ध्यपूर्णं मिथ्यात्वे तत्रापि द्वितीये चतुर्थषष्ठे च।
निर्वृत्त्यपर्याप्तिः तत्रापि शेषेषु पर्याप्तिः ॥ १२७ ॥

अथापर्याप्तकाले सासादनासंयतयोर्नियमेनाभावस्थानान्याह,—

**हेट्ठिमछप्पुढवीणं जोइसिवणभवणसव्वइत्थीणं।**
**पुण्णिदरे ण हि सम्मो ण सासणो णारयापुण्णे ॥१२८॥**

अथस्तनषट्पृथ्वीनां ज्योतिष्कवानभावनसर्वस्त्रीणाम्।
पूर्णेतरस्मिन् न हि सम्यक्त्वं न सासादनो नारकापूर्णे ॥१२८॥

इति पर्याप्तिप्ररूपणाधिकारः।

---

अथ प्राणप्ररूपणा निरूपयति;—

**बाहिरपाणेहिं जहा तहेव अब्भंतरेहिं पाणेहिं।**
**पाणंति जेहिं जीवा पाणा ते होंति णिद्दिट्ठा ॥ १२९ ॥**

बाह्यप्राणैर्यथा तथैवाभ्यन्तरैः प्राणैः।
प्राणन्ति यैर्जीवा. प्राणास्ते भवन्ति निर्दिष्टाः ॥ १२९ ॥

अथ प्राणभेदानाह,—

**पंचवि इन्दियपाणा मणवचिकायेसु तिण्णि बलपाणा**
**आणापाणप्पाणा आउगपाणेण होंति दस पाणा १३०**

पञ्चापि इन्द्रियप्राणा मनोवच.कायेषु त्रयो बलप्राणाः।
आनापानप्राण आयुष्कप्राणेन भवन्ति दश प्राणाः ॥ १३० ॥

अथ द्रव्यभावप्राणानामुत्पत्तिसामग्रीमाह,—

**वीरियजुदमदिखउवसमत्था णोइंदियेंदियेसु बला।**
**देहुदये कायाणा वचीबला आउ आउदये ॥ १३१ ॥**

वीर्य[1]युतमतिक्षयोपशमोत्था नोइन्द्रियेन्द्रियेषु बलाः ।
दे[2]होदये कायानौ वचोबल आयुः आयुरुदये ॥ १३१ ॥

अथ प्राणानां स्वामिमिदमाह,—

**इंदियकायाऊणि य पुण्णापुण्णेसु पुण्णगे आणा ।**
**बीइंदियादिपुण्णे वचीमणोसण्णिपुण्णेव ॥ १३२ ॥**

इन्द्रियकायायूंषि च पूर्णापूर्णेषु पूर्णके आनः ।
द्वीन्द्रियादिपूर्णे वचःमनःसंज्ञिपूर्णे एव ॥ १३२ ॥

अथ प्राणानामेकेन्द्रियादिजीवेषु संख्यानियममवधारयति;—

**दस सण्णीणं पाणा सेसेऽगूणंतिमस्स बेऊणा ।**
**पज्जत्तेस्सिदरेसु य सत्त दुगे सेसगेगूणा ॥ १३३ ॥**

दश संज्ञिनां प्राणा. शेषैकोनमन्तिमस्य व्यूनाः ।
पर्याप्तेष्वितरेषु च सप्त द्विके शेषकैकोनाः ॥ १३३ ॥

इति प्राणाधिकारः ।

---

अथ संज्ञाप्ररूपणा प्ररूपयति;—

**इह जाहि बाहियावि य जीवा पावंति दारुणं दुक्खं ।**
**सेवंतावि य उभये ताओ चत्तारि सण्णाओ ॥१३४॥**

इह याभिर्बाधिता अपि च जीवाः प्राप्नुवन्ति दारुणं दुःखम् ।
सेवमाना अपि च उभयस्मिन् ताश्चतस्रः संज्ञा[3]ः ॥ १३४ ॥

अथाहारसञ्ज्ञोत्पत्तौ वहिरन्तरङ्गहेतू कथयति,—

**आहारदंसणेण य तस्सुवजोगेण ओमकोठाए ।**
**सादिदरुदीरणाए हवदि हु आहारसण्णा हु ॥१३५॥**

आहारदर्शनेन च तस्योपयोगेन अवमकोष्ठेन ।
सातेतरोदीरणया भवति हि आहारसंज्ञा हि ॥ १३५ ॥

---

१. वीर्यान्तरायः । २. शरीरनामकर्म । ३. वाञ्छाः ।

अथ भयसञ्ज्ञोत्पत्तिकारणमाह;—

**अइभीमदंसणेण य तस्सुबजोगेण ओमसत्ताए।**
**भयकम्मुदीरणाए भयसण्णा जायदे चदुहिं॥ १३६॥**

अतिभीमदर्शनेन च तस्योपयोगेन अवमसत्त्वेन।
भयकर्मोदीरणया भयसंज्ञा जायते चतुर्भिः॥ १३६॥

अथ मैथुनसंज्ञासामग्रीं सूचयति;—

**पणिदरसभोयणेण य तस्सुबजोगे कुसीलसेवाए।**
**वेदस्सुदीरणाए मेहुणसण्णा हवदि एवं॥ १३७॥**

प्रणीत[1]रसभोजनेन च तस्योपयोगे कुशील[2]सेवया।
वेदस्योदीरणया मैथुनसंज्ञा भवति एवम्॥ १३७॥

अथ परिग्रहसञ्ज्ञोत्पत्तिहेतूनाह,—

**उवयरणदंसणेण च तस्सुबजोगेण मुच्छिदाए य।**
**लोहस्सुदीरणाए परिग्गहे जायदे सण्णा॥ १३८॥**

उपक[3]रणदर्शनेन च तस्योपयोगेन मूर्च्छि[4]ताये च।
लोभस्योदीरणया परिग्रहे जायते संज्ञा॥ १३८॥

अथ सञ्ज्ञाना स्वामिभेदानाह,—

**णट्ठपमाए पढमा सण्णा ण हि तत्थ कारणाभावा।**
**सेसा कम्मत्थित्तेणुवयारेणत्थि ण हि कज्जे॥ १३९॥**

नष्टप्रमादे प्रथमा संज्ञा न हि तत्र कारणाभावात्।
शेषा कर्मास्तित्वेनोपचारेणास्ति न हि कार्ये॥ १३९॥

---

१. स्वादुवृष्यरसः। २. विटजनादिसेवया। ३. भोगोपभोगसामग्री। ४. ममत्वसम्बन्धे।

अथार्हत्प्रणामरूपमङ्गलपुरस्सरं मार्गणामहाधिकारप्ररूपणप्रतिज्ञां करोति;—

**धम्मगुणमग्गणाहयमोहारिबलं जिणं णमंसित्ता ।**
**मग्गणमहाहियारं विविहहियारं भणिस्सामो ॥१४०॥**

धर्मगुणमार्गणाहतमोहारिबलं जिनं नमसित्वा ।
मार्गणामहाधिकारं विविधाधिकारं भणिष्यामः ॥ १४० ॥

अथ मार्गणाशब्दस्य निरुक्तिसिद्धं लक्षणमाह;—

**जाहि व जासु व जीवा मग्गिज्जंते जहा तहा दिट्ठा ।**
**ताओ चोद्दस जाणे सुयणाणे मग्गणा होंति ॥ १४१ ॥**

याभिर्वा यासु वा जीवा मृग्यन्ते यथा तथा दृष्टाः ।
ताश्चतुर्दश जानीहि श्रुतज्ञाने मार्गणा भवन्ति ॥ १४१ ॥

अथ तासा चतुर्दशमार्गणानां नामोद्देशं करोति;—

**गइइंदियेसु काये जोगे वेदे कसायणाणे य ।**
**संजमदंसणलेस्साभवियासम्मत्तसण्णिआहारे१४२॥**

गतीन्द्रिययोः काये योगे वेदे कषायज्ञाने च ।
संयमदर्शनलेश्याभव्यतासम्यक्त्वसंज्ञ्याहारे ॥ १४२ ॥

अथ तासु सान्तरमार्गणानां स्वरूपसंख्याविधाननिरूपणार्थं गाथात्रयमाह;—

**उवसमसुहुमाहारे वेगुव्वियमिस्सणरअपज्जत्ते ।**
**सासणसम्मे मिस्से सान्तरगा मग्गणा अट्ठ ॥ १४३ ॥**

**सत्तदिणा छम्मासा वासपुधत्तं च बारसमुहुत्ता ।**
**पल्लासंखं तिण्हं वरमवरं एगसमओ दु ॥१४४॥ जुम्मं ॥**

---

१. अन्तरं विरहकालस्तेन सहिताः ।

उपशमसूक्ष्माहारे वैगूर्विकमिश्रनरापर्याप्ते ।
सासादनसम्यक्त्वे मिश्रे सान्तरका मार्गणा अष्ट ॥ १४३ ॥
सप्तदिनानि षण्मासा वर्षपृथक्त्वं च द्वादशमुहूर्ताः ।
पल्यासंख्यं त्रयाणा वैरमवरमेकसमयस्तु ॥ १४४ ॥ युग्मम्॥

**पढमुवसमसहिदाए विरदाविरदीए चोद्दसा दिवसा ।**
**विरदीए पण्णरसा विरहिदकालो दु बोधव्वो ॥१४५॥**

प्रथमोपशमसहिताया विरताविरतेः चतुर्दश दिवसाः ।
विरतेः पञ्चदश विरहितकालस्तु बोद्धव्यः ॥ १४५ ॥

अथ गतिमार्गणां प्रारभमाणो गतिशब्दस्य निरुक्तिं तद्भेदाश्च निरूपयति;—

**गइउदयजपज्जाया चउगइगमणस्स हेउ वा हु गई ।**
**णारयतिरिक्खमाणुसदेवगइत्ति य हवे चदुधा ॥१४६॥**

गत्युदयजपर्याया चतुर्गतिगमनस्य हेतुर्वा हि गतिः ।
नारकतिर्यग्मानुषदेवगतिरिति च भवेच्चतुर्धा ॥ १४६ ॥

अथ नारकगतिं निर्दिशति,—

**णरमंति जदो णिच्चं दव्वे खेत्ते य कालभावे य ।**
**अण्णोण्णेहिं य जम्हा तम्हा ते णारया भणिया १४७**

न रमन्ते यतो नित्यं द्रव्ये क्षेत्रे च कालभावे च ।
अन्योन्यैश्च यस्मात्तस्मात्ते नारता[3] भणिताः ॥ १४७ ॥

अथ तिर्यग्गतिस्वरूप निरूपयति;—

**तिरियंति कुडिलभावं सुविउलसण्णाणिगिट्ठमण्णाणा**
**अच्चंतपाववहुला तम्हा तेरिच्छया भणिया ॥ १४८ ॥**

---

१. तृतीयादुपरि नवकादध पृथक्त्वमित्यागमसज्ञा वर्षाणा पृथक्त्व वर्षपृथक्त्वम् । २. उत्कृष्टम् । ३. नरता नारका एव नारताः स्वार्थेऽणविधानात् ।

तिरोऽञ्चन्ति कुटिलभावं सुविवृतसंज्ञा निकृष्टाज्ञानाः ।
अत्यन्तपापबहुलाः तस्मात् तैरश्चका भणिताः ॥ १४८ ॥

अथ मनुष्यगतिस्वरूपं निरूपयति;—

**मण्णंति जदो णिच्चं मणेण णिउणा मणुक्कडा जम्हा ।**
**मण्णुब्भवा य सव्वे तम्हा ते माणुसा भणिदा ॥ १४९ ॥**

मन्यन्ते यतो नित्यं मनसा निपुणा मनसोत्कटा यस्मात् ।
मनूद्भवाश्च सर्वे तस्मात्ते मानुषा भणिताः ॥ १४९ ॥

अथ तिर्यङ्मनुष्यगतिव्यक्तिभेदान् दर्शयति;—

**सामण्णा पंचिंदी पज्जत्ता जोणिणी अपज्जत्ता ।**
**तिरिया णरा तहावि य पंचिंदियभंगदो हीणा ॥ १५०**

सामान्याः पञ्चेन्द्रियाः पर्याप्ता योनिमत्य अपर्याप्ताः ।
तिर्यञ्चो नरास्तथापि च पञ्चेन्द्रियभङ्गतो हीनाः ॥ १५० ॥

अथ देवगतिं प्ररूपयति;—

**दीव्वंति जदो णिच्चं गुणेहिं अट्ठेहिं दिव्वभावेहिं ।**
**भासंतदिव्वकाया तम्हा ते वण्णिया देवा ॥ १५१ ॥**

दीव्यन्ति यतो नित्यं गुणैरष्टाभिर्दिव्यभावैः ।
भासमानदिव्यकायाः तस्मात्ते वर्णिता देवाः ॥ १५१ ॥

अथ संसारविलक्षणां स्वाभाविकीं सिद्धगतिमाह;—

**जाइजरामरणभया संजोगविजोगदुक्खसण्णाओ ।**
**रोगादिगा य जिस्से ण संति सा होदि सिद्धगई ॥ १५२**

जातिजरामरणभयाः संयोगवियोगदुःखसंज्ञाः ।
रोगादिकाश्च यस्यां न सन्ति सा भवति सिद्धगतिः ॥१५२॥

अथ गतिमार्गणायां जीवसंख्यां कथयंस्तावन्नरकगतौ गाथाद्वयेनाह;—

**सामण्णा णेरइया घणअंगुलविदियमूलगुणसेढी ।**
**विदियादि बारदसअडछत्तिदुणिजपदहिदा सेढी१५३**

सामान्या नैरयिका घनाङ्गुलद्वितीयमूलगुणश्रेणी ।
द्वितीयादि. द्वादशदशाष्टषट्त्रिद्विनिजपदहिता श्रेणी ॥१५३॥

**हेट्ठिमछप्पुढवीणं रासिविहीणो दु सव्वरासी दु ।**
**पढमावणिम्हि रासी णेरयियाणं तु णिद्दिट्ठो ॥१५४॥**

अधस्तनषट्पृथ्वीनां राशिविहीनस्तु सर्वराशिस्तु ।
प्रथमावनौ राशिः नैरयिकाणां तु निर्दिष्टः ॥ १५४ ॥

अथ तिर्यग्जीवसख्या गाथाद्वयेनाह,—

**संसारी पंचक्खा तप्पुण्णा तिगदिहीणया कमसो ।**
**सामण्णा पंचिंदी पंचिंदियपुण्णतेरिक्खा ॥ १५५ ॥**

संसारिणः पञ्चाक्षास्तत्पूर्णाः त्रिगतिहीनकाः क्रमशः ।
सामान्याः पञ्चेन्द्रिया पञ्चेन्द्रियपूर्णतैरश्चाः ॥ १५५ ॥

**छस्सयजोयणकदिहिदजगपदरं जोणिणीय परिमाणं ।**
**पुण्णूणा पंचक्खा तिरियअपज्जत्तपरिसंखा ॥ १५६ ॥**

षट्शतयोजनकृतिहितजगत्प्रतरं[1] योनिमतीनां परिमाणम् ।
पूर्णोना पंचाक्षाः तिर्यगपर्याप्तपरिसंख्या ॥ १५६ ॥

अथ मनुष्यगतिजीवसख्या गाथात्रयेणाह,—

**सेढी सूईअंगुलआदिमतदियपदभाजिदेगूणा ।**
**सामण्णमणुसरासी पंचमकदिघणसमा पुण्णा ॥ १५७**

श्रेणी सूच्यङ्गुलादिमतृतीयपदभाजितैकोना ।
सामान्यमनुष्यराशिः पञ्चमकृतिघनसमाः[2] पूर्णाः ॥ १५७ ॥

**तल्लीनमधुगविमलं[3] धूमसिलागाविचोरभयमेरू ।**
**तटहरिखझसा होंति हु माणुसपज्जत्तसंखंका ॥ १५८ ॥**

---

1 जगत्प्रतरमित्यलौकिकसख्या । २. वर्ग । ३. अत्र तकारादिवर्णैः सख्या गृह्यते तद्ग्रहणप्रकारोनया रीत्योक्तः ।

तादिसान्तान्यक्षराणि, भवन्ति हि मानुपपर्याप्तसंख्याङ्काः ॥१५८

**पज्जत्तमणुस्साणं तिचउत्थो माणुसीण परिमाणं ।**
**सामण्णा पुण्णूणा मणुव अपज्जत्तगा होंति ॥ १५९ ॥**

पर्याप्तमनुष्याणां त्रिचतुर्थो मानुषीणां परिमाणम् ।
सामान्याः पूर्णोना मानवा अपर्याप्तका भवन्ति ॥ १५९ ॥

अथ देवगतिजीवसख्यां गाथाचतुष्टयेनाह;—

**तिण्णिसय जोयणाणं बेसदछप्पण्ण अंगुलाणं च ।**
**कदिहिदपदरं वेंतरजोइसियाणं च परिमाणं ॥ १६० ॥**

त्रिशत योजनानां द्विशतषट्पञ्चाशदङ्गुलानां च ।
कृतिहितप्रतरं व्यन्तरज्योतिष्काणां च परिमाणम् ॥ १६० ॥

**घणअंगुलपढमपदं तदियपदं सेढिसंगुणं कमसो ।**
**भवणे सोहम्मदुगे देवाणं होदि परिमाणं ॥ १६१ ॥**

घनाङ्गुलप्रथमपदं तृतीयपदं श्रेणिसंगुणं क्रमशः ।
भवने सौधर्मद्विके देवानां भवति परिमाणम् ॥ १६१ ॥

**तत्तो एगारणवसगपणचउणियमूलभाजिदा सेढी ।**
**पल्लासंखेज्जदिमा पत्तेयं आणदादिसुरा ॥ १६२ ॥**

तत एकादशनवसप्तपञ्चचतुर्निजमूलभाजिता श्रेणी ।
पल्यासंख्यातका. प्रत्येकमानतादिसुराः ॥ १६२ ॥

**तिगुणा सत्तगुणा वा सव्वट्ठा माणुसीपमाणादो ।**
**सामण्णदेवरासी जोइसियादो विसेसहिया ॥ १६३ ॥**

---

कटपयपुरस्थवर्णैर्नवनवपंचाष्टकल्पितैः क्रमशः ।
स्वरञ्जनशून्यं संख्या मात्रोपरिमाक्षरं त्याज्यम् ॥ १ ॥ इति ।
अङ्कानां वामतो गतिरित्यपि बोद्धव्यम् ।

१. प्रथमवर्गमूलम् । २. जगच्छ्रेणी । ३. अन्याचार्यापेक्षयोक्तम् ।

त्रिगुणा सप्तगुणा वा सर्वार्था मानुषीप्रमाणतः ।
सामान्यदेवराशिः ज्योतिष्कतो विशेषाधिकः ॥ १६३ ॥

इति गतिमार्गणाधिकारः ।

---

अथेन्द्रियमार्गणां प्रारभमाण इन्द्रियशब्दस्य निरुक्तिपूर्वकमर्थं कथयति;—

**अहमिंदा जह देवा अविसेसं अहमहंत्ति मण्णंता ।**
**ईसंति एक्कमेक्कं इंदा इव इंदिये जाण ॥ १६४ ॥**

अहमिन्द्रा यथा देवा अविशेषमहमहमिति मन्यमानाः ।
ईशते एकैकमिन्द्रा इव इन्द्रियाणि जानीहि ॥ १६४ ॥

अथेन्द्रियभेदस्वरूपं निरूपयति;—

**मदियावरणखओवसमुत्थविसुद्धी हु तज्जबोहो वा ।**
**भाविंदियं तु दव्वं देहुदयजदेहचिण्हं तु ॥ १६५ ॥**

मत्यावरणक्षयोपशमोत्थविशुद्धिर्हि तज्जबोधो वा ।
भावेन्द्रियं तु द्रव्यं देहोदयजदेहचिह्नं तु ॥ १६५ ॥

अथ तथाविधेन्द्रियोपलक्षितजीवानाह;—

**फासरसगंधरूवे सद्दे णाणं च चिण्हयं जेसिं ।**
**इगिबितिचदुपंचिंदियजीवा णियभेयभिण्णाओ १६६**

स्पर्शरसगंधरूपे शब्दे ज्ञानं च चिह्नकं येषाम् ।
एकद्वित्रिचतुःपञ्चेन्द्रियजीवा निजभेदभिन्नाः ॥ १६६ ॥

अथैकेन्द्रियादिजीवाना संभवदिन्द्रियसंख्यां प्ररूपयति,—

**एइंदियस्स फुसणं एक्कंवि य होदि सेसजीवाणं ।**
**होंति कमउड्ढियाइं जिब्भाघाणच्छिसोत्ताइं ॥ १६७ ॥**

एकेन्द्रियस्य स्पर्शनमेकमपि च भवति शेषजीवानाम् ।
भवन्ति क्रमवर्द्धितानि जिह्वाघ्राणाक्षिश्रोत्राणि ॥ १६७ ॥

अथ स्पर्शनादीन्द्रियाणां विषयक्षेत्रं गाथात्रयेण प्रमाणयति;—

**धणुवीसडदसयकदी जोयणछादालहीणतिसहस्सा ।**
**अट्ठसहस्स धणूणं विसया दुगुणा असण्णित्ति ॥१६८॥**

धनुर्विंशत्यष्टदशककृतिः योजनषट्चत्वारिंशद्धीनत्रिसहस्राणि ।
अष्टसहस्रं धनुषां विषया द्विगुणा असंज्ञीति ॥ १६८ ॥

**सण्णिस्स बार सोदे तिण्हं णव जोयणाणि चक्खुस्स ।**
**सत्तेतालसहस्सा बेसदतेसट्ठिमदिरेया ॥ १६९ ॥**

संज्ञिनो द्वादश श्रोत्रे त्रयाणां नव योजनानि चक्षुषः ।
सप्तचत्वारिंशत्सहस्राणि द्विशतत्रिषष्ट्यतिरेकाणि ॥ १६९ ॥

**तिण्णिसयसट्ठिविरहिदलक्खं दसमूलताडिदे मूलं ।**
**णवगुणिदे सट्ठिहिदे चक्खुप्फासस्स अद्धाणं ॥१७०॥**

त्रिशतषष्टिविरहितलक्षं दशमूलताडिते मूलम् ।
नवगुणिते षष्टिहिते चक्षुःस्पर्शस्य अध्वानम् ॥ १७० ॥

अथेन्द्रियाणामाकार निर्दिशति;—

**चक्खू सोदं घाणं जिब्भायारं मसूरजवणाली ।**
**अतिमुत्तखुरप्पसमं फासं तु अणेयसंठाणं ॥ १७१ ॥**

चक्षुः श्रोत्रं घ्राणं जिह्वाकारं मसूरयवनाली ।
अतिमुक्तक्षुरप्रसमं स्पर्शनं तु अनेकसंस्थानम् ॥ १७१ ॥

अथेन्द्रियसंस्थानानां प्रदेशावगाहं प्रमाणयति;—

**अंगुलअसंखभागं संखेज्जगुणं तदो विसेसहियं ।**
**तत्तो असंखगुणिदं अंगुलसंखेज्जयं तत्तु ॥ १७२ ॥**

अङ्गुलासंख्यभागं संख्यातगुणं ततो विशेषाधिकम् ।
ततोऽसंख्यगुणितमङ्गुलसंख्यातं तत्तु ॥ १७२ ॥

---

१. चतुर्हस्तप्रमाणं धनुः ।  २. चक्षुर्ज्ञानस्य ।  ३. विषयः ।

अथ स्पर्शनेन्द्रियप्रदेशावगाहप्रमाणमाह;—

**सुहुमणिगोदअपज्जत्तयस्स जादस्स तदियसमयम्हि**
**अंगुलअसंखभागं जहण्णमुक्कस्सयं मच्छे ॥ १७३ ॥**

सूक्ष्मनिगोदापर्याप्तकस्य जातस्य तृतीयसमये ।
अङ्गुलासंख्यभागं जघन्यमुत्कृष्टकं मत्स्ये ॥ १७३ ॥

एवमिन्द्रियज्ञानिसंसारिजीवान् प्ररूप्याधुनातीन्द्रियज्ञानिनः प्ररूपयति;—

**णवि इंदियकरणजुदा अवग्गहादीहि गाहया अत्थे ।**
**णेव य इंदियसोक्खा अणिंदियाणंतणाणसुहा ॥ १७४**

नापि इन्द्रियकरणयुता अवग्रहादिभिः ग्राहका अर्थे ।
नैव च इन्द्रियसौख्या अनिन्द्रियानन्तज्ञानसुखाः ॥ १७४ ॥

अथैकेन्द्रियादीनां संक्षेपतः संख्यामाह;—

**थावरसंखपिपीलियभमरमणुस्सादिगा सभेदा जे ।**
**जुगवारमसंखेज्जाणंताणंता णिगोदभवा ॥ १७५ ॥**

स्थावरसंखपिपीलिकाभ्रमरमनुष्यादिकाः सभेदा ये ।
द्विकवारमसंख्याता अनन्तानन्ता निगोदभवा. ॥ १७५ ॥

अथ विशेषसख्या कथयस्तावदेकेन्द्रियसंख्यामाह;—

**तसहीणो संसारी एयक्खा ताण संखगा भागा ।**
**पुण्णाणं परिमाणं संखेज्जदिमं अपुण्णाणं ॥ १७६ ॥**

त्रसहीनः संसारी एकाक्षाः तेषां संख्यका भागाः ।
पूर्णानां परिमाणं संख्यकमपूर्णानाम् ॥ १७६ ॥

तेषामवान्तरभेदसंख्याविशेषमाह,—

**बादरसुहुमा तेसिं पुण्णापुण्णेत्ति छव्विहाणंपि ।**
**तक्कायमग्गणाये भणिज्जमाणक्कमो णेयो ॥ १७७ ॥**

बादरसूक्ष्मास्तेषां पूर्णापूर्णा इति षड्विधानामपि ।
तत्कायमार्गणायां भणिष्यमाणक्रमो ज्ञेयः ॥ १७७ ॥

अथ त्रसजीवसंख्यां गाथात्रयेणाह;—

**बितिचपमाणमसंखेणवहिदपदरंगुलेण हिदपदरं ।**
**हीणकमं पडिभागो आवलियासंखभागो दु ॥ १७८ ॥**

द्वित्रिचतुःप्रमाणमसंख्येनावहितप्रतराङ्गुलेन हितप्रतरम् ।
हीनक्रमं प्रतिभाग आवलिकासंख्यभागस्तु ॥ १७८ ॥

तद्विभागक्रममाह;—

**बहुभागे समभागो चउण्हमेदेसिमेक्कभागम्हि ।**
**उत्तकमो तत्थवि बहुभागो बहुगस्स देओ दु ॥ १७९ ॥**

बहुभागे समभागश्चतुर्णामेतेषामेकभागे ।
उक्तक्रमस्तत्रापि बहुभागो बहुकस्य देयस्तु ॥ १७९ ॥

**तिबिपचपुण्णपमाणं पदरंगुलसंखभागहिदपदरं ।**
**हीणकमं पुण्णूणा बितिचपजीवा अपज्जत्ता ॥ १८० ॥**

त्रिद्विपंचपूर्णप्रमाणं प्रतराङ्गुलसंख्यभागहितप्रतरम्[3] ।
हीनक्रमं पूर्णोना द्वित्रिचपजीवा अपर्याप्ताः ॥ १८० ॥

इतीन्द्रियप्ररूपणाधिकारः ।

---

अथ कायमार्गणां प्ररूपयति;—

**जाईअविणाभावीतसथावरउदयजो हवे काओ ।**
**सो जिणमदम्हि भणिओ पुढवीकायादिछब्भेयो ॥ १८१ ॥**

जात्यविनाभावित्रसस्थावरोदयजो भवेत् कायः ।
स जिनमते भणितः पृथ्वीकायादिषड्भेदः ॥ १८१ ॥

---

१. कायापेक्षया पञ्च स्थावरा एकत्रस इति षड्विधा. । २. पञ्च चतः ।
३. जगत्प्रतरम् ।

अथ स्थावरकायपञ्चक अपञ्चयन्नादौ चतुर्णामुत्पत्तिकारणं भेदं च द्वयेनाह;—

**पुढवीआऊतेऊवाऊकम्मोदयेण तत्थेव ।**
**णियवण्णचउक्कजुदो ताणं देहो हवे णियमा ॥ १८२ ॥**

पृथिव्यप्तेजोवायुकर्मोदयेन तत्रैव ।
निजवर्णचतुष्कयुतस्तेषां देहो भवेन्नियमात् ॥ १८२ ॥

**बादरसुहुमुदयेण य बादरसुहुमा हवंति तद्देहा ।**
**घादसरीरं थूलं अघाददेहं हवे सुहुमं ॥ १८३ ॥**

वादरसूक्ष्मोदयेन च बादरसूक्ष्मा भवन्ति तद्देहाः ।
घातशरीरं स्थूलमघातदेहं भवेत् सूक्ष्मम् ॥ १८३ ॥

इदानीं तद्देहप्रमाणमाह;—

**तद्देहमंगुलस्स असंखभागस्स विंदमाणं तु ।**
**आधारे थूलाओ सव्वत्थ णिरंतरा सुहुमा ॥ १८४ ॥**

तद्देहमङ्गुलस्यासंख्यभागस्य वृन्दमानं[1] तु ।
आधारे स्थूलाः सर्वत्र निरन्तराः सूक्ष्माः ॥ १८४ ॥

अथ वनस्पतिकायस्वरूपं तद्भेदं च गाथाषट्केनाह;—

**उदये दु वणप्फदिकम्मस्स य जीवा वणप्फदी होंति ।**
**पत्तेयं सामण्णं पदिट्ठिदरेत्ति पत्तेयं ॥ १८५ ॥**

उदये तु वनस्पतिकर्मणश्च जीवा वनस्पतयो भवन्ति ।
प्रत्येकं सामान्यं प्रतिष्ठितेतरे इति प्रत्येकम् ॥ १८५ ॥

**मूलग्गपोरबीजा कंदा तह खंधबीजबीजरुहा ।**
**सम्मुच्छिमा य भणिया पत्तेयाणंतकाया य ॥ १८६**

मूलाग्रपर्वबीजाः कंदास्तथा स्कन्धबीजबीजरुहाः ।
संमूर्च्छिमाश्च भणिताः प्रत्येका अनन्तकायाश्च ॥ १८६ ॥

---

1. घनमानम् ।

गूढसिरसंधिपव्वं समभंगमहीरुयं च छिण्णरुहं।
साहारणं सरीरं तव्विवरीयं च पत्तेयं ॥ १८७ ॥

गूढशिरासंधिपर्वं समभङ्गमहीरुकं[1] च छिन्नरुहम्।
साधारणं[2] शरीरं तद्विपरीतं च प्रत्येकम्[3] ॥ १८७ ॥

मूले कंदे छल्लीपवालसालदलकुसुमफलवीजे।
समभंगे सदि णंता असमे सदि होंति पत्तेया ॥१८८॥

मूले कंदे त्वक्प्रवालशालदलकुसुमफलवीजे।
समभङ्गे सति अनन्ता असमे सति भवन्ति प्रत्येकाः॥१८८॥

कंदस्स व मूलस्स व सालाखंधस्स वावि बहुलतरी।
छल्ली साणंतजिया पत्तेयजिया तु तणुकदरी ॥ १८९ ॥

कन्दस्य वा मूलस्य वा शालास्कन्धस्य वापि बहुलतरा।
त्वक् सा अनन्तजीवा[4] प्रत्येकजीवा तु तनुकतरा ॥ १८९ ॥

वीजे जोणीभूदे जीवो चंकमदि सो व अण्णो वा।
जेवि य मूलादीया ते पत्तेया पढमदाए ॥ १९० ॥

वीजे योनीभूते[5] जीवः चङ्क्रम्यते स वा अन्यो वा।
येपि च मूलादिकास्ते प्रत्येकाः प्रथमतायाम् ॥ १९० ॥

अथ साधारणशरीरवनस्पतिस्वरूपं गाथासप्तकेनाह;—

साहारणोदयेण णिगोदसरीरा हवंति सामण्णा।
ते पुण दुविहा जीवा वादरसुहुमात्ति विण्णेया ॥ १९१

साधारणोदयेन निगोदशरीरा भवन्ति सामान्याः।
ते पुनर्द्विविधा जीवा वादरसूक्ष्मा इति विज्ञेयाः ॥ १९१ ॥

साहारणमाहारो साहारणमाणपाणगहणं च।
साहारणजीवाणं साहारणलक्खणं भणियं ॥ १९२

---

१. अहीरुकमन्तर्गतसूत्ररहितम्। २. प्रतिष्ठितप्रत्येकम्। ३. अप्रतिष्ठितप्रत्येकम्। ४. प्रतिष्ठितप्रत्येकजीवाः। ५. अविनष्टशक्तिके।

साधारणमाहारः साधारणमानापानग्रहणं च ।
साधारणजीवानां साधारणलक्षणं भणितम् ॥ १९२ ॥

**जत्थेक्कु मरइ जीवो तत्थ दु मरणं हवे अणंताणं ।**
**वक्कमइ जत्थ एक्को वक्कमणं तत्थणंताणं ॥ १९३ ॥**

यत्रैको म्रियते जीवस्तत्र तु मरणं भवेत् अनन्तानाम् ।
प्रक्रामति यत्रैकः प्रक्रमण तत्रानन्तानाम् ॥ १९३ ॥

तत्र बादरनिगोदजीवशरीरसंख्यानयनार्थं सोदाहरणं गाथाद्वयमाह;—

**खंधा असंखलोगा अंडरआवासपुलविदेहावि ।**
**हेट्ठिल्लजोणिगाओ असंखलोगेण गुणिदकमा ॥१९४॥**

स्कन्धा असंख्यलोका अंडरावासपुलविदेहा अपि ।
अधस्तनयोनिका असंख्यलोकेन गुणितक्रमाः ॥ १९४ ॥

**जंबूदीवं भरहो कोसलसागेदतग्घराइं वा ।**
**खंधंडरआवासा पुलविशरीराणि दिट्ठंता ॥ १९५ ॥**

जम्बूद्वीपो भरतः कोशलसाकेततद्गृहाणि वा ।
स्कन्धाण्डरावासाः पुलविशरीराणि दृष्टान्ताः ॥ १९५ ॥

**एगणिगोदसरीरे जीवा दव्वप्पमाणदो दिट्ठा ।**
**सिद्धेहिं अणंतगुणा सव्वेण वितीदकालेण ॥ १९६ ॥**

एकनिगोदशरीरे जीवा द्रव्यप्रमाणतो दृष्टाः
सिद्धैरनन्तगुणा. सर्वेण व्यतीतकालेन ॥ १९६ ॥

**अत्थि अणंता जीवा जेहि ण पत्तो तसाण परिणामो ।**
**भावकलंकसुपउरा णिगोदवासं ण मुंचंति ॥ १९७ ॥**

सन्ति अनन्ता जीवा यैर्न प्राप्तः त्रसानां परिणामः ।
भावकलङ्कसुप्रचुरा निगोदवासं न मुञ्चन्ति ॥ १९७ ॥

---

१. अनेन जीवाना द्वैविध्य सूचित तेन केचिज्जीवाः कदाचिदष्टसमयाधिक-षण्मासाभ्यन्तरे निगोदान्निस्सरन्ति ॥

अथ त्रसकायं गाथाद्वयेनाह;—

**बिहि तिहि चदुहिं पंचहि सहिया जे इंदिएहिं लोयम्मि**
**ते तसकाया जीवा णेया वीरोवदेसेण ॥ १९८ ॥**

द्वाभ्यां त्रिभिश्चतुर्भिः पञ्चभिः सहिता ये इन्द्रियैर्लोके ।
ते त्रसकाया जीवा ज्ञेया वीरोपदेशेन ॥ १९८ ॥

**उववादमारणंतियपरिणदतसमुज्झिऊण सेसतसा ।**
**तसणालिबाहिरम्मि य णत्थित्ति जिणेहिं णिद्दिट्ठं १९९**

उपपादमारणान्तिकपरिणतत्रसमुज्झित्वा शेषत्रसाः ।
त्रसनालीबाह्ये च न संतीति जिनैर्निर्दिष्टम् ॥ १९९ ॥

अथ वनस्पतिवदन्येषामपि जीवानां प्रतिष्ठितादिविभागं कथयति;—

**पुढवीआदिचउण्हं केवलिआहारदेवणिरयंगा ।**
**अपदिट्ठिदा णिगोदहिं पदिट्ठिदंगा हवे सेसा ॥ २०० ॥**

पृथिव्यादिचतुर्णां केवल्याहारदेवनिरयाङ्गानि ।
अप्रतिष्ठितानि निगोदैः प्रतिष्ठिताङ्गा भवन्ति शेषाः ॥२००॥

अथ स्थावरकायिकानां त्रसकायिकानां च शरीरसंस्थानमाह;—

**मसुरंबुबिंदुसूईकलावधयसण्णिहो हवे देहो ।**
**पुढवीआदिचउण्हं तरुतसकाया अणेयविहा ॥२०१॥**

मसूराम्बुविन्दुसूचीकलापध्वजसन्निभो भवेद्देहः ।
पृथिव्यादिचतुर्णां तरुत्रसकाया अनेकविधाः ॥ २०१ ॥

एवं कायमार्गणां प्ररूप्य कायसहितस्य संसारिणो दृष्टान्तपूर्वकं व्यवहारमाह;—

**जह भारवहो पुरिसो वहइ भरं गेहिऊण कावलियं ।**
**एमेव वहइ जीवो कम्मभरं कायकावलियं ॥ २०२ ॥**

यथा भारवहः पुरुषो वहति भारं गृहीत्वा कावटिकम् ।
एवमेव वहति जीवः कर्मभरं कायकावटिकम् ॥ २०२ ॥

अथ दृष्टान्तपुरस्सर कायमार्गणातीत सहेतुक सिद्धस्वरूपमाह;—

**जह कंचणमग्गिगयं मुंचइ किट्टेण कालियाए य।**
**तह कायबंधमुक्का अकाइया झाणजोगेण ॥ २०३ ॥**

यथा काञ्चनमग्निगतं मुच्यते किट्टेन कालिकया च।
तथा कायबन्धमुक्ता अकायिका ध्यानयोगेन ॥ २०३ ॥

अथ पृथिवीकायिकादिजीवसंख्यामेकादशगाथासूत्रैः व्याख्याति;—

**आउट्टरासिवारं लोगे अण्णोण्णसंगुणे तेऊ।**
**भूजलवाऊ अहिया पडिभागोऽसंखलोगो दु ॥२०४॥**

सार्धत्रयराशिवारं लोके अन्योन्यसंगुणे तेजः।
भूजलवायव अधिकाः प्रतिभागोऽसंख्यलोकस्तु ॥ २०४ ॥

**अपदिट्ठिदपत्तेया असंखलोगप्पमाणया होंति।**
**तत्तो पदिट्ठिदा पुण असंखलोगेण संगुणिदा॥ २०५॥**

अप्रतिष्ठितप्रत्येका असंख्यलोकप्रमाणका भवन्ति।
ततः प्रतिष्ठिता. पुन. असंख्यलोकेन संगुणिताः ॥ २०५ ॥

**तसरासिपुढविआदीचउक्कपत्तेयहीणसंसारी।**
**साहारणजीवाणं परिमाणं होदि जिणदिट्ठं ॥ २०६ ॥**

त्रसराशिपृथिव्यादिचतुष्कप्रत्येकहीनसंसारी।
साधारणजीवानां परिमाणं भवति जिनदिष्टम् ॥ २०६ ॥

**सगसगअसंखभागो वादरकायाण होदि परिमाणं।**
**सेसा सुहुमपमाणं पडिभागो पुव्वणिद्दिट्ठो ॥ २०७॥**

स्वकस्वकासंख्यभागो वादरकायानां भवति परिमाणम्।
शेषाः सूक्ष्मप्रमाणं प्रतिभागः पूर्वनिर्दिष्टः ॥ २०७ ॥

---

१ वहिर्मलेन। २. वैवर्ण्यरूपान्तर्मलेन। ३. लोकप्रदेशप्रमाणानि शलाकाविरलनदेयराशय. स्थाप्यन्ते तत्र गणितानुसारेण सार्धत्रयवारं शलाकाराशिं संस्थाप्य परस्पर गुणिते। ४. अधिकागमननिमित्तं प्रतिभागहारः।

सुहुमेसु संखभागं संखाभागा अपुण्णगा इदरा ।
जस्सि अपुण्णद्धादो पुण्णद्धा संखगुणिदकमा ॥ २०८ ॥

सूक्ष्मेषु संख्यभागः संख्यभागा अपूर्णका इतरे ।
यस्मादपूर्णाद्धातः पूर्णाद्धा संख्यगुणितक्रमः ॥ २०८ ॥

पल्लासंखेज्जवहिदपदरंगुलभाजिदे जगप्पदरे ।
जलभूणिपबादरया पुण्णा आवलिअसंखभजिदकमा ॥

पल्यासंख्यातावहितप्रतराङ्गुलभाजिते जगत्प्रतरे ।
जलभूनिपवादरकाः पूर्णा आवल्यसंख्यभाजितक्रमाः ॥२०९॥

विंदावलिलोगाणमसंखं संखं च तेउवाऊणं ।
पज्जत्ताण पमाणं तेहिं विहीणा अपज्जत्ता ॥ २१० ॥

वृन्दावलिलोकानामसंख्यं संख्यं च तेजोवायूनाम् ।
पर्याप्तानां प्रमाणं तैर्विहीना अपर्याप्ताः ॥ २१० ॥

साहरणवादरेसु असंखं भागं असंखगा भागा ।
पुण्णाणमपुण्णाणं परिमाणं होदि अणुकमसो ॥२११॥

साधारणवादरेषु असंख्यं भागमसंख्यका भागाः ।
पूर्णानामपूर्णानां परिमाणं भवत्यनुक्रमशः ॥ २११ ॥

आवलिअसंखसंखेणवहिदपदरंगुलेण हिदपदरं ।
कमसो तसतप्पुणा पुण्णूणतसा अपुण्णा हु ॥ २१२

आवल्यसंख्यसंख्येनावहितप्रतराङ्गुलेन हितप्रतरम् ।
क्रमशस्त्रसतत्पूर्णाः पूर्णोनत्रसा अपूर्णा हि ॥ २१२ ॥

तत्र बादरतेजस्कायिकादिषड्राशीनां संख्याविशेषनिर्णयार्थं द्वयेनाहः—

आवलिअसंखभागेणवहिदपल्लूणसायरद्धछिदा ।
बादरतेपणिभूजलवादाणं चरिम सायरं पुण्णं ॥२१३

आवल्यसंख्यभागेनावहितपल्योनसागरार्धच्छेदाः ।
बादरतेपनिभूजलवातानां चरमः सागरः पूर्णः ॥ २१३ ॥

**तेवि विसेसेणहिया पल्लासंखेज्जभागमेत्तेण ।**
**तम्हा ते रासीओ असंखलोगेण गुणिदकमा ॥ २१४ ॥**

तेपि विशेषेणाधिकाः पल्लासंख्यातभागमात्रेण ।
तस्मात्ते राशयोऽसंख्यलोकेन गुणितक्रमाः ॥ २१४ ॥

तत्रापि लब्धानयने त्रैराशिककरणसूत्रमाह;—

**दिण्णच्छेदेणवहिदइट्ठच्छेदेहिं पयदविरलणं भजिदे ।**
**लद्धमिदइट्ठरासीणण्णोण्णहदीए होदि पयदधणं२१५**

देयच्छेदेनावहितेष्टच्छेदैः प्रकृतविरलनं भजिते ।
लब्धमितेष्टराश्यन्योन्यहत्या भवति प्रकृतधनम् ॥ २१५ ॥

॥ इति कायमार्गणाधिकारः ॥

अथ शास्त्रकारो योगमार्गणामारभमाणस्तदादौ योगस्य सामान्यलक्षण-माह;—

**पुग्गलविवाइदेहोदयेण मणवयणकायजुत्तस्स ।**
**जीवस्स जा हु सत्ती कम्मागमकारणं जोगो ॥२१६॥**

पुद्गलविपाकिदेहोदयेन मनोवचनकाययुक्तस्य ।
जीवस्य या हि शक्तिः कर्मागमकारणं योगः ॥ २१६ ॥

अथ योगविशेषलक्षणमाह,—

**मणवयणाण पउत्ती सच्चासच्चुभयत्थेसु ।**
**तण्णामं होदि तदा तेहि दु जोगा हु तज्जोगा॥२१७॥**

---

१. वातकायिकस्य सपूर्णसागरोपममात्रा अर्द्धच्छेदा इति भाव । २ देय-राश्यर्धच्छेदेन । ३ परस्पर गुणितेन । ४ अङ्गोपाङ्गनामकर्मण । ५. कर्मे-त्युपलक्षण तेन नोकर्मवर्गणारूपपुद्गलस्कन्धानामप्यागमन गृह्यते ।

मनोवचनयोः प्रवृत्तयः सत्यासत्योभयानुभयार्थेषु ।
तन्नाम भवति तदा तैस्तु योगात् हि तद्योगाः ॥ २१७ ॥

तत्रापि मनोवचनयोगयोर्विशेषलक्षणं गाथाचतुष्टयेनाह;—

**सब्भावमणो सच्चो जो जोगो तेण सच्चमणजोगो ।**
**तव्विवरीओ मोसो जाणुभयं सच्चमोसोत्ति ॥ २१८ ॥**

सद्भावमनः सत्यं यो योगस्तेन सत्यमनोयोगः ।
तद्विपरीतो मृषा जानीहि उभयं सत्यमृषेति ॥ २१८ ॥

**ण य सच्चमोसजुत्तो जो दु मणो सो असच्चमोसमणो ।**
**जो जोगो तेण हवे असच्चमोसो दु मणजोगो ॥ २१९ ॥**

न च सत्यमृषायुक्तं यत्तु मनः तदसत्यमृषामनः ।
यो योगस्तेन भवेदसत्यमृषा तु मनोयोगः ॥ २१९ ॥

**दसविहसच्चे वयणे जो जोगो सो दु सच्चवचिजोगो ।**
**तव्विवरीओ मोसो जाणुभयं सच्चमोसोत्ति ॥ २२० ॥**

दशविधसत्ये वचने यो योगः स तु सत्यवचोयोगः ।
तद्विपरीतो मृषा जानीहि उभयं सत्यमृषेति ॥ २२० ॥

**जो णेव सच्चमोसो सो जाण असच्चमोसवचिजोगो ।**
**अमणाणं जा भासा सण्णीणामंतणीआदी ॥ २२१ ॥**

यो नैव सत्यमृषा स जानीहि असत्यमृषावचोयोगः ।
अमनसां या भाषा संज्ञिनामामन्त्रण्यादि. ॥ २२१ ॥

अथ जनपदादिदशविधसत्यमुदाहरणपूर्वक गाथात्रयेणाह;—

**जणवदसम्मदिठवणाणामे रूवे पडुच्चववहारे ।**
**संभावणे य भावे उवमाए दसविहं सच्चं ॥ २२२ ॥**

जनपदसम्मतिस्थापनानाम्नि रूपे प्रतीत्यव्यवहारे ।
संभावनायां च भावे उपमायां दशविधं सत्यम् ॥ २२२ ॥

**भत्तं देवी चंदप्पहपडिमा तह य होदि जिणदत्तो ।**
**सेदो दिग्घो रज्झदि कूरोत्ति य जं हवे वयणं ॥ २२३ ॥**

भक्तं देवी चन्द्रप्रभप्रतिमा तथा च भवति जिनदत्तः ।
श्वेतो दीर्घो रध्यते क्रूरमिति च यद्भवेद्वचनम् ॥ २२३ ॥

**सक्को जंबूदीवं पल्लट्टदि पाववज्जवयणं च ।**
**पल्लोवमं च कमसो जणवदसच्चादिदिट्ठंता ॥ २२४ ॥**

शक्रो जम्बूद्वीपं परिवर्तयति पापवर्जवचनं च ।
पल्योपमं च क्रमशो जनपदसत्यादिदृष्टान्ताः ॥ २२४ ॥

अथानुभयवचनभेदान् गाथाद्वयेनाह;—

**आमंतणि आणवणी याचणियापुच्छणी य पण्णवणी ।**
**पच्चक्खाणी संसयवयणी इच्छाणुलोमा य ॥ २२५ ॥**

आमन्त्रणी आज्ञापनी याचनी आपृच्छनी च प्रज्ञापनी ।
प्रत्याख्यानी संशयवचनी इच्छानुलोम्नी च ॥ २२५ ॥

**णवमी अणक्खरगदा असच्चमोसा हवंति भासाओ ।**
**सोदाराणं जम्हा वत्तावत्तंससंजणया ॥ २२६ ॥**

नवमी अनक्षरगता असत्यमृषा भवन्ति भाषाः ।
श्रोतृणां यस्माद् व्यक्ताव्यक्तांशसंज्ञापिकाः ॥ २२६ ॥

अथ सत्यानुभयासत्योभयमनोवचनयोगानां कारणं कथयति;—

**मणवयणाणं मूलणिमित्तं खलु पुण्णदेहउदओ दु ।**
**मोसुभयाणं मूलणिमित्तं खलु होदि आवरणं ॥ २२७**

---

१. ओदनम् ।

मनोवचनयोर्मूलनिमित्तं खलु पूर्णदेहोदयस्तु ।
मृषोभययोर्मूलनिमित्तं खलु भवत्यावरणम् ॥ २२७ ॥

अथ सयोगकेवलिनि मनोयोगसंभवप्रकारं गाथाद्वयेनाह;—

**णसहियाणं वयणं दिट्ठं तप्पुव्वमिदि सजोगम्हि ।**
**उत्तो मणोवयारेणिंदियणाणेण हीणम्हि ॥ २२८ ॥**

मनःसहितानां वचनं दृष्टं तत्पूर्वमिति सयोगे ।
उक्तो मनउपचारेणेन्द्रियज्ञानेन हीने ॥ २२८ ॥

अथोपचारकथनस्य प्रयोजनमिदानीमुच्यते;—

**अंगोवंगुदयादो दव्वमणट्ठं जिणिंदचंदम्हि ।**
**मणवग्गणखंधाणं आगमणादो दु मणजोगो ॥ २२९ ॥**

अङ्गोपाङ्गोदयात् द्रव्यमनःस्थं जिनेन्द्रचन्द्रे ।
मनोवर्गणास्कन्धानामागमनात् तु मनोयोगः ॥ २२९ ॥

अथ काययोगं कथयन् प्रथममौदारिककाययोगं निरुक्तिपूर्वकं कथयति;—

**पुरु महदुदारुरालं एयट्ठो संविजाण तम्हि भवं ।**
**ओरालियं तमुच्चइ ओरालियकायजोगो सो ॥ २३० ॥**

पुरु महदुदारमुरालमेकार्थः संविजानीहि तस्मिन् भवम् ।
औरालिकं तदुच्यते औरालिककाययोगः सः ॥ २३० ॥

अथौदारिककायमिश्रयोगं प्ररूपयति;—

**ओरालिय उत्तत्थं विजाण मिस्सं तु अपरिपुण्णं तं ।**
**जो तेण संपजोगो ओरालियमिस्सजोगो सो ॥ २३१ ॥**

औरालिकमुक्तार्थं विजानीहि मिश्रं तु अपरिपूर्णं तत् ।
यस्तेन संप्रयोग औरालिकमिश्रयोगः सः ॥ २३१ ॥

अथ वैक्रियिककाययोगं कथयति;—

**विविहगुणइड्ढिजुत्तं विक्किरियं वा हु होदि वेगुव्वं।**
**तिस्से भवं च णेयं वेगुव्वियकायजोगो सो ॥ २३२॥**

विविधगुणर्द्धियुक्तं विक्रियं वा हि भवति विगूर्वम्।
तस्मिन् भवं च ज्ञेयं वैगूर्विककाययोगः सः ॥ २३२ ॥

अथ वैक्रियिककाययोगस्य सभवस्थानान्तरमाह;—

**वादरतेऊवाऊपंचिंदियपुण्णगा विगुव्वंति।**
**ओरालियं सरीरं विगुव्वणप्पं हवे जेसिं ॥ २३३ ॥**

वादरतेजोवायुपंचेन्द्रियपूर्णका विगूर्वन्ति।
औरालिकं शरीरं विगूर्वणात्मकं भवेत् येषाम् ॥ २३३ ॥

अथ वैक्रियिककायमिश्रयोगमाह;—

**वेगुव्विय उत्तत्थं विजाण मिस्सं तु अपरिपुण्णं तं।**
**जो तेण संपजोगो वेगुव्वियमिस्सजोगो सो ॥ २३४॥**

वैगूर्विकमुक्तार्थं विजानीहि मिश्रं तु अपरिपूर्णं तत्।
यस्तेन संप्रयोगो वैगूर्विकमिश्रयोगः सः ॥ २३४ ॥

अथाहारककाययोग गाथापञ्चकेन प्ररूपयति;—

**आहारस्सुदयेण य पमत्तविरदस्स होदि आहारं।**
**असंजमपरिहरणट्ठं संदेहविणासणट्ठं च ॥ २३५ ॥**

आहारकस्योदयेन च प्रमत्तविरतस्य भवति आहारकम्।
असंयमपरिहरणार्थं सदेहविनाशनार्थं च ॥ २३५ ॥

**णियखेत्ते केवलिदुगविरहे णिक्कमणपहुदिकल्लाणे।**
**परखेत्ते संवित्ते जिणजिणघरवंदणट्ठं च ॥ २३६ ॥**

निजक्षेत्रे केवलिद्विकविरहे निःक्रमणप्रभृतिकल्याणे।
परक्षेत्रे संवृत्ते जिनजिनगृहवंदनार्थं च ॥ २३६ ॥

**उत्तमअंगम्हि हवे धादुविहीणं सुहं असंघडणं।**
**सुहसंठाणं धवलं हत्थपमाणं पसत्थुदयं ॥ २३७ ॥**

उत्तमाङ्गे भवेत् धातुविहीनं शुभमसंहननम् ।
शुभसंस्थानं धवलं हस्तप्रमाणं प्रशस्तोदयम् ॥ २३७ ॥

**अव्वाघादी अंतोमुहुत्तकालट्ठिदी जहण्णिदरे।**
**पज्जत्तीसंपुण्णे मरणंपि कदाचि संभवइ ॥ २३८ ॥**

अव्याघाती अन्तर्मुहूर्त्तकालस्थिती जघन्येतरे ।
पर्याप्तिसंपूर्णायां मरणमपि कदाचित् संभवति ॥ २३८ ॥

**आहरदि अणेण मुणी सुहुमे अत्थे सयस्स संदेहे।**
**गत्ता केवलिपासं तम्हा आहारगो जोगो ॥ २३९ ॥**

आहरत्यनेन मुनिः सूक्ष्मानर्थान् स्वस्य संदेहे ।
गत्वा केवलिपार्श्वं तस्मादाहारको योगः ॥ २३९ ॥

अथाहारककायमिश्रयोगं प्ररूपयति;—

**आहारयमुत्तत्थं विजाण मिस्सं तु अपरिपुण्णं तं।**
**जो तेण संपजोगो आहारयमिस्सजोगो सो ॥ २४० ॥**

आहारकमुक्तार्थं विजानीहि मिश्रं तु अपरिपूर्णं तत् ।
यस्तेन संप्रयोग आहारकमिश्रयोगः सः ॥ २४० ॥

अथ कार्मणकाययोगं निरूपयति;—

**कम्मेव य कम्मभवं कम्मइयं तेण जो दु संजोगो।**
**कम्मइयकायजोगो इगिविगतिगसमयकालेसु ॥ २४१**

कर्मैव च कर्मभवं कार्मणं तेन यस्तु संयोगः ।
कार्मणकाययोग एकद्विकत्रिकसमयकालेषु ॥ २४१ ॥

अथ योगप्रवृत्तिप्रकारमाह;—

**वेगुव्वियआहारयकिरिया ण समं पमत्तविरदम्हि ।**
**जोगोवि एक्ककाले एक्केव य होदि णियमेण ॥ २४२ ॥**

वैगूर्विकाहारकक्रिया न समं प्रमत्तविरते ।
योगोऽपि एककाले एक एव च भवति नियमेन ॥ २४२ ॥

अथ योगरहितात्मस्वरूपं प्ररूपयति,—

**जेसिं ण संति जोगा सुहासुहा पुण्णपावसंजणया ।**
**ते होंति अजोगिजिणा अणोवमाणंतबलकलिया २४३**

येषां न सन्ति योगाः शुभाशुभाः पुण्यपापसंजनकाः ।
ते भवन्ति अयोगिजिना अनुपमानन्तबलकलिताः ॥ २४३ ॥

अथ शरीरस्य कर्मनोकर्मविभागं कथयति,—

**ओरालियवेगुव्वियआहारयतेजणामकम्मुदये ।**
**चउणोकम्मसरीरा कम्मेव य होदि कम्मइयं ॥ २४४ ॥**

औरालिकवैगूर्विकाहारकतेजोनामकर्मोदये ।
चतुर्नोकर्मशरीराणि कर्मैव च भवति कार्मणम् ॥ २४४ ॥

अथौदारिकादिशरीराणां समयप्रबद्धादिसंख्यां गाथाद्वयेनाह,—

**परमाणूहिं अणंतहिं वग्गणसण्णा हु होदि एक्का हु ।**
**ताहि अणंतहिं णियमा समयपबद्धो हवे एक्को ॥२४५॥**

परमाणुभिरनन्तैर्वर्गणासंज्ञा हि भवत्येका हि ।
ताभिरनन्तैर्नियमात् समयप्रबद्धो भवेदेकः ॥ २४५ ॥

**ताणं समयपबद्धा सेढिअसंखेज्जभागगुणिदकमा ।**
**णंतेण य तेजदुगा परं परं होदि सुहुमं खु ॥ २४६ ॥**

---

१. समयेन प्रबध्यतेस्म कर्मनोकर्मरूपतया आत्मना सबध्यतेस्म यः पुद्गल-स्कध स समयप्रबद्ध ।

तेषां समयप्रबद्धाः श्रेण्यसंख्यभागगुणितक्रमा ।
अनन्तेन च तेजोद्विकाः परं परं भवति सूक्ष्मं खलु ॥ २४६ ॥

अथौदारिकादिशरीराणां समयप्रबद्धवर्गणयोरवगाहनभेदमाह;—

**ओगाहणाणि ताणं समयपबद्धाण वग्गणाणं च ।**
**अंगुलअसंखभागा उवरुवरिमसंखगुणहीणा ॥२४७॥**

अवगाहनानि तेषां समयप्रबद्धानां वर्गणानां च ।
अङ्गुलासंख्यभागा उपर्युपरि असंख्यगुणहीनानि ॥ २४७ ॥

अमुमेवार्थं श्रीमाधवचन्द्रत्रैविद्यदेवा अपि कथयन्ति;—

**तस्समयबद्धवग्गणओगाहो सूइअंगुलासंख ।**
**भागहिदबिंदअंगुलमुवरुवरिं तेण भजिदकमा ॥ २४७**

तत्समयबद्धवर्गणावगाहः सूच्यङ्गुलासंख्य ।
भागहितबृन्दाङ्गुलमुपर्युपरि तेन भजितक्रमाः ॥ २४७ ॥

अथ विस्रसोपचयस्वरूपं प्ररूपयति;—

**जीवादोणंतगुणा पडिपरमाणुम्हि विस्ससोवचया ।**
**जीवेण य समवेदा एक्केक्कं पडि समाणा हु ॥ २४८ ॥**

जीवतोऽनन्तगुणा प्रतिपरमाणौ विस्रसोपचयाः ।
जीवेन च समवेता एकैकं प्रति समाना हि ॥ २४८ ॥

अथ कर्मनोकर्मोत्कृष्टसंचयस्वरूपस्थानलक्षणं निरूपयति;—

**उक्कस्सट्ठिदिचरिमे सगसगउक्कस्ससंचओ होदि ।**
**पणदेहाणं वरजोगादिससामग्गिसहियाणं ॥ २४९ ॥**

उत्कृष्टस्थितिचरमे स्वकस्वकोत्कृष्टसंचयो भवति ।
पञ्चदेहानां वरयोगादिस्वसामग्रीसहितानाम् ॥ २४९ ॥

---

१. इद गाथासूत्रं केशववर्णिना न गृहीतं श्रीमदभयचन्द्रसूरिसिद्धान्तचक्रवर्तिभिर्गृहीतं तदनुसारेण श्रीमद्विद्वच्छिरोमणिभाषाकारटोडरमल्लेनापि भाषाव्याख्या कृतास्ति ।

अथ श्रीमाधवचन्द्रत्रैविद्यदेवा उत्कृष्टसंचयसामग्रीविशेषं कथयन्ति;—

**आवासया हु भवअद्धाउस्सं जोगसंकिलेसो य।**
**ओकट्टुक्कट्टणया छच्चेदे गुणिदकम्मंसे ॥ २५० ॥**

आवश्यकानि हि भवाद्धा आयुष्यं योगसंक्लेशश्च।
अपकर्षणोत्कर्षणके षट् चैते गुणितकर्मांशे ॥ २५० ॥

अथौदारिकादिपञ्चशरीराणामुत्कृष्टस्थितिप्रमाणमाह;—

**पल्लतियं उवहीणं तेत्तीसंतोमुहुत्त उवहीणं।**
**छावट्ठी कम्मट्ठिदि बंधुक्कस्सट्ठिदी ताणं ॥ २५१ ॥**

पल्यत्रयमुदधीनां त्रयस्त्रिंशदन्तर्मुहूर्त उदधीनाम्।
षड्षष्टिः कर्मस्थितिर्बन्धोत्कृष्टस्थितिस्तेषाम् ॥ २५१ ॥

अथौदारिकादिपञ्चोत्कृष्टस्थितीना गुणहान्यायाम प्रमाणयति;—

**अंतोमुहुत्तमेत्तं गुणहाणी होदि आदिमतिगाणं।**
**पल्लासंखेज्जदिमं गुणहाणी तेजकम्माणं ॥ २५२ ॥**

अन्तर्मुहूर्तमात्री गुणहानिर्भवति आदित्रिकानाम्।
पल्यासंख्यातो गुणहानिस्तेजःकर्मणोः ॥ २५२ ॥

अथौदारिकादिसमयप्रबद्धाना बन्धोदयसत्तावस्थासु द्रव्यप्रमाणं प्ररूपयति;—

**एक्कं समयपबद्धं बंधदि एक्कं उदेदि चरिमम्मि।**
**गुणहाणीण दिवड्ढं समयपबद्धं हवे सत्तं ॥ २५३ ॥**

एकं समयप्रबद्धं बध्नाति एकमुदेति चरमे।
गुणहानीनां द्व्यर्धं समयप्रबद्धं भवेत् सत्त्वम् ॥ २५३ ॥

---

१. अवश्य भवानि उत्कृष्टसचयकारणानीति भाव। २. उत्कृष्टकर्मसचयवति जीवे।

अथौदारिकवैक्रियिकशरीरयोर्विशेषमाह;—

**णवरि[1] य दुसरीराणं गलिदवसेसाउमेत्तठिदिबंधो ।**
**गुणहाणीण दिवड्ढं संचयमुदयं च चरिमम्हि ॥ २५४ ॥**

नवरि च द्विशरीरयोर्गलितावशेषायुर्मात्रस्थितिबन्धः ।
गुणहानीनां द्व्यर्धं संचयमुदयं च चरमे ॥ २५४ ॥

अथौदारिकशरीरस्य कस्मिन् स्थाने कीदृक्सामग्रीरूपावश्यकयुतजीवे उत्कृष्टसचयः स्यादिति चेदाह;—

**ओरालियवरसंचं देवुत्तरकुरुवजादजीवस्स ।**
**तिरियमणुस्सस्स हवे चरिमदुचरिमे तिपल्लठिदिगस्स ।**

औरालिकवरसंचयं देवोत्तरकुरूपजातजीवस्य ।
तिर्यग्मनुष्यस्य भवेत् चरमद्विचरमे त्रिपल्यस्थितिकस्य ॥ २५५ ॥

अथ वैक्रियिकशरीरस्योत्कृष्टसंचयस्थानं प्ररूपयति;—

**वेगुव्वियवरसंचं बावीससमुद्द आरणदुगम्मि ।**
**जम्हा वरजोगस्स य वारा अण्णत्थ णहि बहुगा ॥ २५६**

वैगूर्विकवरसंचयं द्वाविंशतिसमुद्रमारणद्विके ।
यस्माद् वरयोगस्य च वारा अन्यत्र न हि बहुकाः ॥ २५६ ॥

अथ तैजसकार्मणशरीरयोरुत्कृष्टसंचयस्थानविशेषं निरूपति;—

**तेजासरीरजेट्ठं सत्तमचरिमम्हि बिदियवारस्स ।**
**कम्मस्स वि तत्थेव य णिरये बहुवारभमियस्स ॥ २५७ ॥**

तैजसशरीरज्येष्ठं सप्तमचरमे द्वितीयवारस्य ।
कार्मणस्यापि तत्रैव च निरये बहुवारभ्रान्तस्य ॥ २५७ ॥

अथ द्वादशगाथासूत्रैर्योगमार्गणायां जीवसंख्यामाह;—

**बादरपुण्णा तेऊ सगरासीए असंखभागमिदा ।**
**विक्किरियसत्तिजुत्ता पल्लासंखेज्जया वाऊ ॥ २५८ ॥**

---

1. णवरीति विशेषार्थे वर्तते ।

बादरपूर्णाः तैजसाः स्वकराशेरसंख्यभागमिताः ।
विक्रियाशक्तियुक्ताः पल्लासंख्याता वायवः ॥ २५८ ॥

पल्लासंखेज्जाहयविंदंगुलगुणिदसेढिमेत्ता हु ।
वेगुव्वियपंचक्खा भोगभुमा पुह विगुव्वंति ॥ २५९ ॥

पल्यासंख्याताहतबृन्दाङ्गुलगुणितश्रेणिमात्रा हि ।
वैगूर्विकपञ्चाक्षा भोगभूमाः पृथक् विगूर्वन्ति ॥ २५९ ॥

देवेहिं सादिरेया तिजोगिणो तेहिं हीण तसपुण्णा ।
बियजोगिणो तदूणा संसारी एक्कजोगा हु ॥ २६० ॥

देवैः सातिरेका त्रियोगिनः तैर्हीना त्रसपूर्णाः ।
द्वियोगिनः तदूना संसारिण एकयोगा हि ॥ २६० ॥

अंतोमुहुत्तमेत्ता चउमणजोगा कमेण संखगुणा ।
तज्जोगो सामण्णं चउवचिजोगा तदो दु संखगुणा २६१

अन्तर्मुहूर्तमात्राः चतुर्मनोयोगाः क्रमेण संख्यगुणाः ।
तद्योगः सामान्यं चतुर्वचोयोगाः ततस्तु संख्यगुणाः ॥२६१॥

तज्जोगो सामण्णं काओ संखाहदो तिजोगिमिदं ।
सव्वसमासविभजिदं सगसगगुणसंगुणे दु सगरासी

तद्योगः सामान्य कायः संख्याहृतः त्रियोगिमितम् ।
सर्वसमासविभक्तं स्वकस्वकगुणसंगुणे तु स्वकराशिः ॥२६२॥

कम्मोरालियमिस्सयओरालद्धासु संचिदअणंता ।
कम्मोरालियमिस्सयओरालियजोगिणो जीवा ॥ २६३

कार्मणौदारिकमिश्रकौरालाद्धासु संचितानन्ताः ।
कार्मणौरालिकमिश्रकौरालिकयोगिनो जीवाः ॥ २६३ ॥

समयत्तयसंखावलिसंखगुणावलिसमासहिदरासी ।
सगगुणगुणिदे थोवो असंखसंखाहदो कमसो ॥ २६४ ॥

समयत्रयसंख्यावलिसंख्यगुणावलिसमासहितराशिं ।
स्वकगुणगुणिते स्तोक असंख्यसंख्याहतः क्रमशः ॥ २६४ ॥

तत्र वैक्रियिकमिश्रकाययोगिवैक्रियिककाययोगिजीवसंख्यां गाथाचतुष्टयेनाह;—

**सोवक्कमाणुवक्कमकालो संखेज्जवासठिदि वाणे ।**
**आवलिअसंखभागो संखेज्जावलिपमा कमसो ॥ २६५**

सोपक्रमानुपक्रमकालः संख्यातवर्षस्थितिः वाने ।
आवल्यसंख्यभागः संख्यातावलिप्रमः क्रमशः ॥ २६५ ॥

**तहिं सव्वे सुद्धसला सोवक्कमकालदो दु संखगुणा ।**
**तत्तो संखगुणूणा अपुण्णकालम्मि सुद्धसला ॥ २६६ ॥**

तस्मिन् सर्वे शुद्धशलाकाः सोपक्रमकालतस्तु संख्यगुणाः ।
ततः संख्यगुणोना अपूर्णकाले शुद्धशलाकाः ॥ २६६ ॥

**तस्सुद्धसलागाहिदणियरासिमपुण्णकाललद्धाहिं ।**
**सुद्धसलागाहिं गुणे वेंतरवेगुव्वमिस्सा हु ॥ २६७ ॥**

तच्छुद्धशलाकाहितनिजराशिमपूर्णकाललब्धाभिः ।
शुद्धशलाकाभिर्गुणे व्यन्तरवैगूर्वमिश्रा हि ॥ २६७ ॥

**तहिं सेसदेवणारयमिस्सजुदे सव्वमिस्सवेगुव्वं ।**
**सुरणिरयकायजोगा वेगुव्वियकायजोगा हु ॥ २६८ ॥**

तस्मिन् शेषदेवनारकमिश्रयुते सर्वमिश्रवैगूर्वम् ।
सुरनिरयकाययोगा वैगूर्विककाययोगा हि ॥ २६८ ॥

अथाहारकतन्मिश्रकाययोगिनां संख्यामाह,—

**आहारकायजोगा चउवण्णं होंति एकसमयम्मि ।**
**आहारमिस्सजोगा सत्तावीसा दु उक्कस्सं ॥ २६९ ॥**

आहारकाययोगाः चतुष्पञ्चाशत् भवन्ति एकसमये ।
आहारमिश्रयोगाः सप्तविंशतिस्तूत्कृष्टम् ॥ २६९ ॥

इति योगमार्गणाधिकारः ।

---

अथ वेदमार्गणां गाथाषट्केन प्ररूपयति;—

**पुरुसिच्छिसंढवेदोदयेण पुरुसिच्छिसंढओ भावे ।**
**णामोदयेण दव्वे पाएण समा कहिं विसमा ॥ २७० ॥**

पुरुषस्त्रीषण्ढवेदोदयेन पुरुषस्त्रीषण्ढो भावे ।
नामोदयेन द्रव्ये प्रायेण समाः क्वचिद् विषमाः ॥ २७० ॥

**वेदस्सुदीरणाए परिणामस्स य हवेज्ज संमोहो ।**
**संमोहेण ण जाणदि जीवो हु गुणं व दोसं वा ॥ २७१**

वेदस्योदीरणायां परिणामस्य च भवेत् संमोहः ।
संमोहेन न जानाति जीवो हि गुणं वा दोषं वा ॥ २७१ ॥

**पुरुगुणभोगे सेदे करेदि लोयम्मि पुरुगुणं कम्मं ।**
**पुरुउत्तमो य जम्हा तम्हा सो वण्णिओ पुरिसो ॥ २७२**

पुरुगुणभोगे शेते करोति लोके पुरुगुणं कर्म ।
पुरूत्तमश्च यस्मात् तस्मात् स वर्णितः पुरुषः ॥ २७२ ॥

अथ स्त्रीवेद निरुक्तिपूर्वक कथयति;—

**छादयदि सयं दोसे णयदो छाददि परंपि दोसेण ।**
**छादणसीला जम्हा तम्हा सा वण्णिया इत्थी ॥ २७३**

छादयति स्वकं दोषैः नयतः छादयति परमपि दोषेण ।
छादनशीला यस्मात् तस्मात् सा वर्णिता स्त्री ॥ २७३ ॥

---

१. स्तृणाति छादयतीति स्त्री । २ मृदुभाषणस्निग्धविलोकनानुकूलवर्तनादिकुशलव्यापाररूपयुक्तित । ३ यद्यपि तीर्थकरजनन्यादीना कासांचित्सम्यग्दृष्टीना पूर्वोक्तदोषाभावस्तथापि तासा दुर्लभत्वेन सर्वत्र सुलभप्राचुर्यव्यवहारापेक्षया स्त्रीलक्षण निरुक्तिपूर्वकमीदृशमुक्तमाचार्यैः ।

अथ नपुंसकलक्षणं निरुक्तिपूर्वकमाह;—

**णेवित्थी णेव पुमं णउंसओ उहयलिंगविदिरित्तो।**
**इट्टावग्गिसमाणगवेदणगरुओ कलुसचित्तो॥ २७४॥**

नैव स्त्री नैव पुमान् नपुंसक उभयलिङ्गव्यतिरिक्तः।
इष्टापाकाग्निसमानकवेदनागुरुकः कलुषचित्तः॥ २७४॥

अथ वेदोन्मुक्तजीवानाह;—

**तिणकारिसिट्टपागग्गिसरिसपरिणामवेयणुम्मुका।**
**अवगयवेदा जीवा सयसंभवणंतवरसोक्खा॥ २७५॥**

तृणकारीषेष्टपाकाग्निसदृशपरिणामवेदनोन्मुक्ताः।
अपगतवेदा जीवाः स्वकसंभवानन्तवरसौख्याः॥ २७५॥

अथ वेदमार्गणायां जीवसंख्यां गाथापञ्चकेन प्ररूपयति;—

**जोइसियवाणजोणिणिति-**
**रिक्खपुरुसा य सण्णिणो जीवा।**
**तत्तेउपम्मलेस्सा संखगुणूणा कमेणेदे॥ २७६॥**

ज्योतिष्कवानयोनिनीतिर्यक्पुरुषाश्च संज्ञिनो जीवाः।
तत्तेजःपद्मलेश्याः संख्यगुणोनाः क्रमेणैते॥ २७६॥

**इगिपुरिसे बत्तीसं देवी तज्जोगभजिददेवोघे।**
**सगगुणगारेण गुणे पुरिसा महिला य देवेसु॥ २७७॥**

एकपुरुषे द्वात्रिंशद्देव्यः तद्योगभक्तदेवौघे।
स्वकगुणकारेण गुणे पुरुषा महिलाश्च देवेषु॥ २७७॥

**देवेहिं सादिरेया पुरिसा देवीहि साहिया इत्थी।**
**तेहिं विहीण सवेदो रासी संढाण परिमाणं॥ २७८॥**

देवैः सातिरेका पुरुषा देवीभिः साधिकाः स्त्रियः।
तैर्विहीनः सवेदो राशिः षण्ढानां परिमाणम्॥ २७८॥

**गब्भणपुइत्थिसण्णी सम्मुच्छणसण्णिपुण्णगा इदरा।**
**कुरुजा असण्णिगब्भजणपुइत्थीवाणजोइसिया २७९**
**थोवा तिसु संखगुणा तत्तो आवलिअसंखभागगुणा।**
**पल्लासंखेज्जगुणा तत्तो सव्वत्थ संखगुणा २८० जुम्मं**

गर्भजपुस्त्रीसंज्ञिनः संमूर्च्छनसंज्ञिपूर्णका इतरे।
कुरुजा असंज्ञिगर्भजनपुस्त्रीवानज्योतिष्काः ॥ २७९ ॥
स्तोकाः त्रिषु संख्यगुणाः तत आवल्यसंख्यभागगुणाः।
पल्यासंख्यातगुणाः ततः सर्वत्र संख्यगुणाः ॥२८०॥ युग्मम्॥

इति वेदमार्गणाधिकारः ॥

---

अथ कषायमार्गणां कथयन् तावत्कषायशब्दस्य निरुक्तिं कृषधातुमाश्रित्याह;—

**सुहदुक्खसुबहुसस्सं कम्मक्खेत्तं कसेदि जीवस्स।**
**संसारदूरमेरं तेण कसाओत्ति णं बेंति ॥ २८१ ॥**

सुखदुःखसुबहुसस्यं कर्मक्षेत्रं कृषति जीवस्य।
संसारदूरमर्यादं तेन कषाय इतीमं ब्रुवन्ति ॥ २८१ ॥

अथवा हिंसार्थककषधातुमाश्रित्य निरुक्तिमाह;—

**सम्मत्तदेससयलचरित्तजहक्खादचरणपरिणामे।**
**घादंति वा कसाया चउसोलअसंखलोगमिदा ॥ २८२**

सम्यक्त्वदेशसकलचरित्रयथाख्यातचरणपरिणामान्।
घातयन्ति वा कषायाः चतुःषोडशासंख्यलोकमिताः ॥२८२॥

इदानीं क्रोधकषायस्य शक्त्यपेक्षया भेदान् दर्शयति;—

**सिलपुढविभेदधूलीजलराइसमाणओ हवे कोहो।**
**णारयतिरियणरामरगईसु उप्पायओ कमसो ॥ २८३ ॥**

शिलापृथ्वीभेदधूलिजलराजिसमानको भवेत् क्रोधः ।
नारकतिर्यग्नरामरगतिषूत्पादकः क्रमशः ॥ २८३ ॥

अथ मानस्य शक्त्यपेक्षया भेदान् निरूपयति;—

**सेलट्ठिकट्ठवेत्ते णियभेएणणुहरंतओ माणो ।**
**णारयतिरियणरामरगईसु उप्पायओ कमसो ॥२८४॥**

शैलास्थिकाष्ठवेत्रान् निजभेदेनानुहरन् मानः ।
नारकतिर्यग्नरामरगतिषूत्पादकः क्रमशः ॥ २८४ ॥

अथ मायाभेदान् प्ररूपयति;—

**वेणुवमूलोरब्भयसिंगे गोमुत्तए य खोरप्पे ।**
**सरिसी माया णारयतिरियणरामरगईसु खिवदि जियं**

वेणूपमूलोरभ्रकशृङ्गेण गोमूत्रेण च क्षुरप्रेण ।
सदृशी माया नारकतिर्यग्नरामरगतिषु क्षिपति जीवम्॥२८५॥

अथ लोभभेदान् शक्त्यपेक्षया कथयति;—

**किमिरायचक्कतणुमलहरिद्दराएण सरिसओ लोहो ।**
**णारयतिरिक्खमाणुसदेवेसुप्पायओ कमसो॥ २८६॥**

क्रिमिरागचक्रतनुमलहरिद्रारागेण सदृशो लोभः ।
नारकतिर्यग्मानुषदेवेषूत्पादकः क्रमशः ॥ २८६ ॥

अथ नारकादिगतिषु क्रोधाद्युदयनियममाह;—

**णारयतिरिक्खणरसुरगईसु उप्पण्णपढमकालम्मि ।**
**कोहो माया माणो लोहुदओ अणियमो वापि॥२८७॥**

नारकतिर्यग्नरसुरगतिषूत्पन्नप्रथमकाले ।
क्रोधो माया मानो लोभोदय अनियमो वापि ॥ २८७ ॥

अथ कषायरहितजीवानाह;—

**अप्पपरोभयबाधणबंधासंजमणिमित्तकोहादी।**
**जेसिं णत्थि कसाया अमला अकसाइणो जीवा २८८**

आत्मपरोभयबाधनबन्धासंयमनिमित्तक्रोधादयः।
येषां न सन्ति कषाया अमला अकषायिणो जीवाः॥ २८८॥

अथ क्रोधादिकषायाणां शक्त्याद्यपेक्षया स्थानभेदमाह;—

**कोहादिकसायाणं चउचोदसवीस होंति पदसंखा।**
**सत्तीलेस्साआउगबंधाबंधगदभेदेहिं॥ २८९॥**

क्रोधादिकषायाणां चतुश्चतुर्दशविंशतिः भवन्ति पदसंख्याः।
शक्तिलेश्यायुष्कबन्धाबन्धगतभेदैः॥ २८९॥

तत्र तावच्छक्त्यपेक्षया स्थानभेदमाह;—

**सिलसेलवेणुमूलक्किमिरायादी कमेण चत्तारि।**
**कोहादिकसायाणं सत्तिं पडि होंति णियमेण॥२९०॥**

शिलाशैलवेणुमूलक्रिमिरागादीनि क्रमेण चत्वारि।
क्रोधादिकषायाणां शक्तिं प्रति भवन्ति नियमेन॥ २९०॥

अथ लेश्यापेक्षया स्थानभेदं कथयति;—

**किण्हं सिलासमाणे किण्हादी छक्कमेण भूमिम्हि।**
**छक्कादी सुक्कोत्ति य धूलिम्मि जलम्मि सुक्केक्का॥२९१॥**

कृष्णा शिलासमाने कृष्णादयः षट् क्रमेण भूमौ।
षट्कादिः शुक्लेति च धूलौ जले शुक्लैका॥ २९१॥

अथायुर्बन्धाबन्धापेक्षया स्थानानि गाथात्रयेण दर्शयति;—

**सेलगकिण्हे सुण्णं णिरयं च य भूगएगबिट्ठाणे।**
**णिरयं इगिबितिआऊ तिट्ठाणे चारि सेसपदे॥२९२**

शैलगकष्णे शून्यं निरयं च च भूगैकद्विस्थाने ।
निरयमेकद्वित्र्यायुस्त्रिस्थाने चत्वारि शेषपदे ॥ २९२ ॥

**धूलिगछक्कट्ठाणे चउराऊ तिगदुगं च उवरिल्लं ।**
**पणचदुठाणे देवं देवं सुण्णं च तिट्ठाणे ॥ २९३ ॥**

धूलिगषट्कस्थाने चतुरायूंषि त्रिकद्विकं चोपरितनम् ।
पञ्चचतुर्थस्थाने देवं देवं शून्यं च तृतीयस्थाने ॥ २९३ ॥

**सुण्णं दुगइगिठाणे जलम्मि सुण्णं असंखभजिदकमा ।**
**चउचोदसवीसपदा असंखलोगा हु पत्तेयं ॥ २९४ ॥**

शून्यं द्विकैकस्थाने जले शून्यमसंख्यभजितक्रमाः ।
चतुश्चतुर्दशाविंशतिपदा असंख्यलोका हि प्रत्येकम् ॥ २९४ ॥

अथ कषायमार्गणायां जीवसंख्यां गाथात्रयेण प्ररूपयति;—

**पुह पुह कसायकालो णिरये अंतोमुहुत्तपरिमाणो ।**
**लोहादी संखगुणो देवेसु य कोहपहुदीदो ॥ २९५ ॥**

पृथक् पृथक् कषायकालो निरये अन्तर्मुहूर्तपरिमाणः ।
लोभादिः सख्यगुणो देवेषु च क्रोधप्रभृतितः ॥ २९५ ॥

**सव्वसमासेणवहिदसगसगरासी पुणोवि संगुणिदे ।**
**सगसगगुणगारेहि य सगसगरासीण परिमाणं ॥ २९६**

सर्वसमासेनावहितस्वकस्वकराशौ पुनरपि संगुणिते ।
स्वकस्वकगुणकारैश्च स्वकस्वकराशीनां परिमाणम् ॥ २९६ ॥

**णरतिरिय लोहमायाकोहो माणो बिइंदियादिव्व ।**
**आवलिअसंखभज्जा सगकालं वा समासेज्ज ॥ २९७ ॥**

नरतिरश्चोः लोभमायाक्रोधो मानो द्वीन्द्रियादिवत् ।
आवल्यसंख्यभाज्याः स्वककालं वा समासाद्य ॥ २९७ ॥

॥ इति कषायमार्गणाधिकारः ॥

अथ ज्ञानमार्गणां प्रारभमाणो निरुक्तिपूर्वक ज्ञानसामान्यलक्षणमाह;—

**जाणइ तिकालविसए दव्वगुणे पज्जए य बहुभेदे ।**
**पचक्खं च परोक्खं अणेण णाणेत्ति णं बेंति ॥ २९८**

जानाति त्रिकालविषयान् द्रव्यगुणान् पर्यायांश्च बहुभेदान् ।
प्रत्यक्षं च परोक्षमनेन ज्ञानमिति इद ब्रुवन्ति ॥ २९८ ॥

अथ ज्ञानभेदान् प्ररूपयति;—

**पंचेव होंति णाणा मदिसुदओहीमणं च केवलयं ।**
**खयउवसमिया चउरो केवलणाणं हवे खइयं ॥ २९९ ॥**

पञ्चैव भवन्ति ज्ञानानि मतिश्रुतावधिमनश्च केवलम् ।
क्षायोपशमिकानि चत्वारि केवलज्ञानं भवेत् क्षायिकम् ॥२९९॥

अथ मिथ्याज्ञानोत्पत्तिकारणस्वरूपस्वामिभेदानाह,—

**अण्णाणतियं होदि हु सण्णाणतियं खु मिच्छअणउदये**
**णवरि विभंगं णाणं पंचिंदियसण्णिपुण्णेव ॥ ३०० ॥**

अज्ञानत्रिकं भवति हि सद्ज्ञानत्रिकं खलु मिथ्यात्वानोदये ।
नवरि विभंगं ज्ञानं पञ्चेन्द्रियसञ्ज्ञिपूर्णे एव ॥ ३०० ॥

अथ सम्यग्मिथ्यादृष्टिगुणस्थाने ज्ञानस्वरूप निरूपयति,—

**मिस्सुदये सम्मिस्सं अण्णाणतियेण णाणतियमेव ।**
**संजमविसेससहिए मणपज्जवणाणमुद्दिट्ठं ॥ ३०१ ॥**

मिश्रोदये संमिश्रमज्ञानत्रयेण ज्ञानत्रयमेव ।
संयमविशेषसहिते मन पर्ययज्ञानमुद्दिष्टम् ॥ ३०१ ॥

अथ मिथ्याज्ञानविशेषलक्षणं गाथात्रयेणाह,—

**विसजंतकूडपंजरबंधादिसु विणुवएसकरणेण ।**
**जा खलु पवट्टइ मई मइअण्णाणंत्ति णं बेंति ॥३०२॥**

---

१. अवधिज्ञानस्य द्वितीय नाम ।

विषयन्त्रकूटपञ्जरवन्धादिपु विनोपदेशकरणेन ।

या खलु प्रवर्तते मतिः मत्यज्ञानमिति इदं ब्रुवन्ति ॥ ३०२ ॥

**आभीयमासुरक्खं भारहरामायणादिउवएसा ।**
**तुच्छा असाहणीया सुयअण्णाणंत्ति णं वेंति ॥३०३॥**

आभीतमासुरक्षं भारतरामायणाद्युपदेशाः ।

तुच्छा असाधनीयाः श्रुताज्ञानमिति इदं ब्रुवन्ति ॥ ३०३ ॥

**विवरीयमोहिणाणं खओवसमियं च कम्मवीजं च ।**
**वेभंगोत्ति पउच्चइ समत्तणाणीण समयम्मि ॥ ३०४ ॥**

विपरीतमवधिज्ञानं क्षायोपशमिकं च कर्मवीजं च ।

विभङ्ग इति प्रोच्यते समाप्तज्ञानिनां समये ॥ ३०४ ॥

अथ स्वरूपोत्पत्तिकारणभेदविषयानाश्रित्य मतिज्ञान गाथानवकेन प्ररूपयति;—

**अहिमुहणियमियबोहणमाभिणि-**
**बोहियमणिंदिइंदियजम् ।**
**अवगहईहावायाधारणगा होंति पत्तेयं ॥ ३०५॥**

अभिमुखनियमितबोधनमाभिनिबोधिकमनिन्द्रियेंद्रियजम् ।

अवग्रहेहावायधारणका भवन्ति प्रत्येकम् ॥ ३०५ ॥

**वेंजणअत्थअवग्गहभेदा हु हवंति पत्तपत्तत्थे ।**
**कमसो ते वावरिदा पढमं ण हि चक्खुमणसाणं॥३०६**

व्यंञ्जनार्थावग्रहभेदौ हि भवतः प्राप्ताप्राप्तार्थे ।

क्रमशस्तौ व्यापृतौ प्रथमो न हि चक्षुर्मनसोः ॥ ३०६ ॥

---

१. मूषकादिग्रहणार्थमवलम्बितकाष्ठादिमयं कूटम् । २. आ समन्ताद्भीता आभीता चौरास्तच्छास्त्रमप्याभीतम् । ३ मतिज्ञानम् । ४. विगतमञ्जनमभिव्यक्तिर्यस्य तद्व्यञ्जन व्यज्यते प्राप्यते इति व्यञ्जनं शब्दादिक श्रोत्रादिना इन्द्रियेण प्राप्तमपि यावन्नाभिव्यक्त तावदेव व्यञ्जनमिति पुनरभिव्यक्तौ सत्यां तदेवार्थो भवति । ५. प्रवृत्तौ ।

विसयाणं विसईणं संजोगाणंतरं हवे णियमा ।
अवगहणाणं गहिदे विसेसकंखा हवे ईहा ॥ ३०७ ॥

विषयाणां विषयिणां संयोगानन्तरं भवेत् नियमात् ।
अवग्रहज्ञानं गृहीते विशेषाकाङ्क्षा भवेदीहा ॥ ३०७ ॥

ईहणकरणेण जदा सुणिण्णओ होदि सो अवाओ दु ।
कालंतरेवि णिण्णिदवत्थुसमरणस्स कारणं तुरियं ३०८

ईहनकरणेन यदा सुनिर्णयो भवति स अवायस्तु ।
कालान्तरेपि निर्णीतवस्तुस्मरणस्य कारणं तुर्यम् ॥ ३०८ ॥

बहु बहुविहं च खिप्पाणिस्सिदणुत्तं धुवं च इदरं च ।
तत्थेक्केक्के जादे छत्तीसं तिसयभेदं तु ॥ ३०९ ॥

बहु बहुविधं च क्षिप्रानिसृतदनुक्तं ध्रुवं च इतरञ्च ।
तत्रैकैकस्मिन् जाते षट्त्रिंशत् त्रिशतभेदं तु ॥ ३०९ ॥

बहुवत्तिजादिगहणे बहुबहुविहमियरमियरगहणम्मि
सगणामादो सिद्धा खिप्पादी सेदरा य तहा ॥ ३१०

बहुव्यक्तिजातिग्रहणे बहु बहुविधमितरदितरग्रहणे ।
स्वकनामत सिद्धा क्षिप्रादयः सेतराश्च तथा ॥ ३१० ॥

तत्रानिःसृतज्ञानविशेष सोदाहरण गाथाद्वयेनाह,—

वत्थुस्स पदेसादो वत्थुग्गहणं तु वत्थुदेसं वा ।
सयलं वा अवलंबिय अणिस्सिदं अण्णवत्थुगई ॥३११

वस्तुनः प्रदेशात् वस्तुग्रहणं तु वस्तुदेश वा ।
सकलं वा अवलम्ब्य अनिसृतमन्यवस्तुगतिः ॥ ३११ ॥

पुक्खरगहणे काले हत्थिस्स य वदणगवयगहणे वा ।
वत्थंतरचंदस्स य धेणुस्स य बोहणं च हवे ॥ ३१२ ॥

पुष्करग्रहणे काले हस्तिनश्च वदनगवयग्रहणे वा ।
वस्वन्तरचन्द्रस्य च धेनोश्च वोधनं च भवेत् ॥ ३१२ ॥

**एक्कचउक्कं चउवीसट्ठावीसं च तिप्पडिं किच्चा ।**
**इगिछव्वारसगुणिदे मदिणाणे होंति ठाणाणि ॥३१३**

एकचतुष्कं चतुर्विंशत्यष्टाविंशतिश्च त्रिःप्रतिं कृत्वा ।
एकषड्द्वादशगुणिते मतिज्ञाने भवन्ति स्थानानि ॥ ३१३ ॥

अथ श्रुतज्ञानप्ररूपणा प्रारभमाणस्तावत्सामान्यलक्षण निरूपयति;—

**अत्थादो अत्थंतरमुवलंभं तं भणंति सुदणाणं ।**
**आभिणिबोहियपुव्वं णियमेणिह सद्दजं पमुहं ॥३१४**

अर्थादर्थान्तरमुपलम्भं तद् भणन्ति श्रुतज्ञानम् ।
आभिनिवोधिकपूर्वं नियमेन इह शव्दजं प्रमुखम् ॥ ३१४ ॥

अथ श्रुतज्ञानस्य अनक्षराक्षरात्मकभेदौ प्ररूपयति;—

**लोगाणमसंखमिदा अणक्खरप्पे हवंति छट्ठाणा ।**
**वेरूवछट्ठवग्गपमाणं रूऊणमक्खरगं ॥ ३१५ ॥**

लोकानामसंख्यमिता अनक्षरात्मके भवन्ति षट्स्थानानि ।
द्विरूपषष्ठवर्गप्रमाणं रूपोनमक्षरगम् ॥ ३१५ ॥

अथ श्रुतज्ञानस्य प्रकारान्तरेण भेदप्ररूपणार्थं गाथाद्वयमाह;—

**पज्जायक्खरपदसंघादं पडिवत्तियाणिजोगं च ।**
**दुगवारपाहुडं च य पाहुडयं वत्थु पुव्वं च ॥ ३१६ ॥**

पर्यायाक्षरपदसंघातं प्रतिपत्तिकानुयोगं च ।
द्विकवारप्राभृतं च च प्राभृतकं वस्तु पूर्वं च ॥ ३१६ ॥

**तेसिं च समासेहि य वीसविहं वा हु होदि सुदणाणं**
**आवरणस्सवि भेदा तत्तियमेत्ता हवंतित्ति ॥ ३१७ ॥**

---

१. द्विरूपवर्गधारास्वरूपं त्रिलोकसारे उक्त तत्रोत्पन्नषष्ठवर्गप्रमाणम् ।

तेषां च समासैः च विंशविध वा हि भवति श्रुतज्ञानम् ।
आवरणस्यापि भेदा तावन्मात्रा भवन्ति इति ॥ ३१७ ॥

अथ पर्यायनाम्नः प्रथमश्रुतज्ञानभेदस्य स्वरूप गाथाचतुष्टयेनाह;—

**णवरि विसेसं जाणे सुहुमजहण्णं तु पज्जयं णाणं ।**
**पज्जायावरणं पुण तदनंतरणाणभेदम्हि ॥ ३१८ ॥**

नवरि विशेषं जानीहि सूक्ष्मजघन्यं तु पर्यायं ज्ञानम् ।
पर्यायावरणं पुन: तदनन्तरज्ञानभेदे ॥ ३१८ ॥

**सुहुमणिगोदअपज्जत्तयस्स जादस्स पढमसमयम्मि ।**
**हवदि हु सव्वजहण्णं णिच्चुग्घाडं णिरावरणं ॥ ३१९**

सूक्ष्मनिगोदापर्याप्तकस्य जातस्य प्रथमसमये ।
भवति हि सर्वजघन्यं नित्योद्घाटं निरावरणम् ॥ ३१९ ॥

**सुहुमणिगोदअपज्जत्तगेसु सगसंभवेसु भमिऊण ।**
**चरिमापुण्णतिवक्काणादिमवक्कट्ठियेव हवे ॥ ३२० ॥**

सूक्ष्मनिगोदापर्याप्तगेषु स्वकसंभवेषु भ्रमित्वा ।
चरमापूर्णत्रिवक्राणामादिमवक्रस्थिते एव भवेत् ॥ ३२० ॥

**सुहुमणिगोदअपज्जत्तयस्स जादस्स पढमसमयम्हि ।**
**फासिंदियमदिपुव्वं सुदणाणं लद्धिअक्खरयं ॥३२१॥**

सूक्ष्मनिगोदापर्याप्तकस्य जातस्य प्रथमसमये ।
स्पर्शेन्द्रियमतिपूर्वं श्रुतज्ञानं लब्ध्यक्षरकम् ॥ ३२१ ॥

---

१. समासशब्दस्य दशभेदेषु प्रत्येकमभिसम्बन्ध कर्तव्य इति रीत्या विंशतिभेदम् । २. णवरीत्यव्यय प्राकृते केवलार्थे वर्तते । ३ पर्यायसमासज्ञानप्रथमभेदे आवरण न तु पर्यायज्ञाने तदावरणे ज्ञानस्य जीवगुणस्याभावे गुणिनो जीवस्याप्यभावप्रसङ्गात् ।

अथ पर्यायसमासप्रकरणं दशभिर्गाथासूत्रैः प्ररूपयति;—

**अवरुवरिम्मि अणंतमसंखं संखं च भागवड्ढीए ।**
**संखमसंखमणंतं गुणवड्ढी होंति हु कमेण ॥ ३२२ ॥**

अवरोपरि अनन्तमसंख्यं संख्यं च भागवृद्धयः ।
संख्यमसंख्यमनन्तं गुणवृद्धयो भवन्ति हि क्रमेण ॥ ३२२ ॥

**जीवाणं च य रासी असंखलोगा वरं खु संखेज्जं ।**
**भागगुणम्मि य कमसो अवट्ठिदा होंति छट्ठाणा ३२३**

जीवानां च च राशिः असंख्यलोका वरं खलु संख्यातम् ।
भागगुणे च क्रमश अवस्थिता भवन्ति षट्स्थानाः ॥ ३२३ ॥

इदानीं पुनरपि लघुसंदृष्टिनिमित्त षड्वृद्धीनां सदृष्टिनामान्तरं कथयति;-

**उव्वंकं चउरंकं पणछस्सत्तंक अट्ठअंकं च ।**
**छव्वड्ढीणं सण्णा कमसो संदिट्ठिकरणट्ठं ॥ ३२४ ॥**

उर्वंकः चतुरङ्कः पञ्चषट्सप्ताङ्कः अष्टाङ्कश्च ।
षड्वृद्धीनां संज्ञा क्रमश. संदृष्टिकरणार्थम् ॥ ३२४ ॥

**अंगुलअसंखभागे पुव्वगवड्ढीगदे दु परवड्ढी ।**
**एकं वारं होदि हु पुणो पुणो चरिमउड्ढित्ति ॥ ३२५ ॥**

अङ्गुलासंख्यभागे पूर्वगवृद्धिगते तु परवृद्धिः ।
एकं वारं भवति हि पुनः पुनः चरमवृद्धिरिति ॥ ३२५ ॥

**आदिमछट्ठाणम्मि य पंचय वड्ढी हवंति सेसेसु ।**
**छव्वड्ढीओ होंति हु सरिसा सव्वत्थ पदसंखा ॥३२६**

आदिमषट्स्थाने च पञ्च वृद्धयो भवन्ति शेषेषु ।
षड्वृद्धयो भवन्ति हि सदृशा सर्वत्र पदसंख्या ॥ ३२६ ॥

**छट्ठाणाणं आदी अट्ठंकं होदि चरिममुव्वंकं ।**
**जम्हा जहण्णणाणं अट्ठंकं होदि जिणदिट्ठं ॥ ३२७ ॥**

षट्स्थानानामादिः अष्टाङ्कं भवति चरममुर्वङ्कम् ।
यस्माज्जघन्यज्ञानमष्टाङ्कं भवति जिनदिष्टम् ॥ ३२७ ॥

**एक्कं खलु अट्ठंकं सत्तंकं कंडयं तदो हेट्ठा ।**
**रूवहियकंडएण य गुणिदकमा जावमुव्वंकं ॥ ३२८ ॥**

एकं खलु अष्टाङ्कं सप्ताङ्कं काण्डकं ततोधः ।
रूपाधिककाण्डकेन च गुणितक्रमा यावदुर्वङ्कः ॥ ३२८ ॥

**सव्वसमासो णियमा रूवाहियकंडयस्स वग्गस्स ।**
**विंदस्स य संवग्गो होदित्ति जिणेहिं णिद्दिट्ठं॥३२९॥**

सर्वसमासो नियमात् रूपाधिककाण्डकस्य वर्गस्य ।
वृन्दस्य च संवर्गो भवतीति जिनैर्निर्दिष्टम् ॥ ३२९ ॥

**उक्कस्ससंखमेत्तं तत्तिचउत्थेकदालछप्पण्णं ।**
**सत्तदसमं च भागं गंतूण य लद्धिअक्खरं दुगुणं ३३०**

उत्कृष्टसंख्यमात्रं तत्रिचतुर्थैकचत्वारिंशत्षट्पञ्चाशम् ।
सप्तदशम च भागं गत्वा च लब्ध्यक्षर द्विगुणम् ॥ ३३० ॥

**एवं असंखलोगा अणक्खरप्पे हवंति छट्ठाणा ।**
**ते पज्जायसमासा अक्खरगं उवरि वोच्छामि॥३३१॥**

एवमसंख्यलोका अनक्षरात्मके भवन्ति षट्स्थानानि ।
ते पर्यायसमासा अक्षरगमुपरि वक्ष्यामि ॥ ३३१ ॥

अथाक्षरश्रुतज्ञान प्ररूपयति,—

**चरिमुव्वंकेणवहिदअत्थक्खरगुणिदचरिममुव्वंकं ।**
**अत्थक्खरं तु णाणं होदित्ति जिणेहिं णिद्दिट्ठं ॥३३२॥**

चरमोर्वङ्केणावहितार्थाक्षरगुणितचरमोर्वङ्कम् ।
अर्थाक्षर तु ज्ञानं भवतीति जिनैर्निर्दिष्टम् ॥ ३३२ ॥

अथ श्रुतनिबद्धविषयप्रमाण निरूपयति;—

**पण्णवणिज्जा भावा अणंतभागो दु अणभिलप्पाणं ।**
**पण्णवणिज्जाणं पुण अणंतभागो सुदणिबद्धो ॥ ३३३**

प्रज्ञापनीया भावा अनन्तभागस्तु अनभिलाप्यानाम् ।
प्रज्ञापनीयानां पुनः अनन्तभागः श्रुतनिबद्धः ॥ ३३३ ॥

अथ शास्त्रकारो गाथाद्वयेनाक्षरसमासं पदनाम च प्ररूपयति;—

**एयक्खरादु उवरिं एगेगेणक्खरेण वड्ढंतो ।**
**संखेज्जे खलु उड्ढे पदणामं होदि सुदणाणं ॥ ३३४ ॥**

एकाक्षरादुपरि एकैकेनाक्षरेण वर्धमानाः ।
संख्येये खलु वृद्धे पदनाम भवति श्रुतज्ञानम् ॥ ३३४ ॥

**सोलससयचउतीसा कोडी तियसीदिलक्खयं चेव ।**
**सत्तसहस्साट्ठसया अट्ठासीदी य पदवण्णा ॥ ३३५ ॥**

षोडशशतचतुस्त्रिंशत्कोट्य. त्र्यशीतिलक्षकं चैव ।
सप्तसहस्राण्यष्टशतानि अष्टाशीतिश्च पदवर्णाः ॥ ३३५ ॥

अथ संघातश्रुतज्ञानं प्ररूपयति;—

**एयपदादो उवरिं एगेगेणक्खरेण वड्ढंतो ।**
**संखेज्जसहस्सपदे उड्ढे संघादणाम सुदं ॥ ३३६ ॥**

एकपदादुपरि एकैकेनाक्षरेण वर्धमानाः ।
संख्येयसहस्रपदे वृद्धे संघातनाम श्रुतम् ॥ ३३६ ॥

अथ प्रतिपत्तिकश्रुतज्ञानस्वरूपं प्ररूपयति;—

**एक्कदरगदिणिरूवयसंघादसुदादु उवरि पुव्वं वा ।**
**वण्णे संखेज्जे संघादे उड्ढम्हि पडिवत्ती ॥ ३३७ ॥**

एकतरगतिनिरूपकसंघातश्रुतादुपरि पूर्वं वा ।
वर्णे संख्याते संघाते वृद्धे प्रतिपत्तिः ॥ ३३७ ॥

अथानुयोगश्रुतज्ञानं निरूपयति;—

**चउगइसरूवरूवयपडिवत्तीदो दु उवरि पुव्वं वा ।**
**वण्णे संखेज्जे पडिवत्ती उड्ढम्मि अणियोगं ॥ ३३८ ॥**

चतुर्गतिस्वरूपरूपकप्रतिपत्तितस्तु उपरि पूर्वं वा ।
वर्णे सख्याते प्रतिपत्तौ वृद्धे अनुयोगम् ॥ ३३८ ॥

अथ प्राभृतकप्राभृतकस्वरूपं गाथाद्वयेन कथयति;—

**चोद्दसमग्गणसंजुदअणियोगादुवरि वड्ढिदे वण्णे ।**
**चउरादीअणियोगे दुगवारं पाहुडं होदि ॥ ३३९ ॥**

चतुर्दशमार्गणासंयुतानुयोगादुपरि वर्धिते वर्णे ।
चतुराद्यनुयोगे द्विकवारं प्राभृतं भवति ॥ ३३९ ॥

**अहियारो पाहुडयं एयट्ठो पाहुडस्स अहियारो ।**
**पाहुडपाहुडणामं होदित्ति जिणेहिं णिद्दिट्ठं ॥ ३४० ॥**

अधिकारः प्राभृतकमेकार्थः प्राभृतस्याधिकारः ।
प्राभृतप्राभृतनामा भवतीति जिनैर्निर्दिष्टम् ॥ ३४० ॥

अथ प्राभृतकस्वरूप निरूपयति,—

**दुगवारपाहुडादो उवरिं वण्णे कमेण चउवीसे ।**
**दुगवारपाहुडे संवुड्ढे खलु होदि पाहुडयं ॥ ३४१ ॥**

द्विकवारप्राभृतादुपरि वर्णे क्रमेण चतुर्विंशतौ ।
द्विकवारप्राभृते संवृद्धे खलु भवति प्राभृतकम् ॥ ३४१ ॥

अथ वस्तुनामश्रुतज्ञानस्वरूपमाह;—

**वीसं वीसं पाहुडअहियारे एक्क वत्थुअहियारो ।**
**एक्केक्कवण्णउड्ढी कमेण सव्वत्थ णायव्वा ॥ ३४२ ॥**

विंशतौ विंशतौ प्राभृताधिकारे एको वस्त्वधिकारः ।
एकैकवर्णवृद्धिः क्रमेण सर्वत्र ज्ञातव्या ॥ ३४२ ॥

अथ चतुर्दशभेदात्मकं पूर्वस्वरूपं निरूपयति;—

**दस चोदसट्ठ अट्ठारसयं बारं च बार सोलं च।**
**वीसं तीसं पण्णारसं च दस चदुसु वत्थूणं॥ ३४३॥**

दश चतुर्दशाष्ट अष्टादश द्वादश च द्वादश षोडश च।
विंशतिः त्रिंशत् पञ्चदश च दश चतुर्षु वस्तूनाम्॥ ३४३॥

इदानीं तेषां नामान्याह;—

**उप्पायपुव्वगाणियविरियपवादत्थिणत्थियपवादे।**
**णाणासच्चपवादे आदाकम्मप्पवादे य॥ ३४४॥**
**पच्चक्खाणे विज्जाणुवादकल्लाणपाणवादे य।**
**किरियाविसालपुव्वे कमसोथ तिलोयबिंदुसारे य ३४५**
**जुम्मं।**

उत्पादपूर्वाग्रायणीयवीर्यप्रवादास्तिनास्तिप्रवादानि।
ज्ञानसत्यप्रवादे आत्मकर्मप्रवादे च॥ ३४४॥
प्रत्याख्यानं वीर्यानुवादकल्याणप्राणवादानि च।
क्रियाविशालपूर्वं क्रमश अथ त्रिलोकविन्दुसारं च ३४५ युग्मम्।

अथ चतुर्दशपूर्वगतवस्तुप्राभृतकसख्यां प्ररूपयति;—

**पण णउदिसया वत्थू पाहुडया तियसहस्सणवयसया।**
**एदेसु चोद्दसेसु वि पुव्वेसु हवंति मिलिदाणि॥३४६**

पञ्चनवतिशतानि वस्तूनि प्राभृतकानि त्रिसहस्रनवशतानि।
एतेषु चतुर्दशस्वपि पूर्वेषु भवन्ति मिलितानि॥ ३४६॥

अथ पूर्वोक्तविंशतिविधश्रुतज्ञानविकल्पोपसहारं गाथाद्वयेनाह;—

**अत्थक्खरं च पदसंघादं पडिवत्तियाणिजोगं च।**
**दुगवारपाहुडं च य पाहुडयं वत्थुपुव्वं च॥ ३४७॥**

